❀ श्रीगणेशाय नमः ❀

गुरुमण्डलग्रन्थमालाया नवमपुष्पकम्

# स्मृति - सन्दर्भः

श्रीमन्महर्षि मार्कण्डेयलौगाक्षिप्रणीतो ध ाास्त्रसंग्रहो
मार्कण्डेयलौगाक्षिस्मृतिद्वयात्म ०ः

## षष्ठोभागः

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं वटुकत्रयम्पदयुगं दूतीक्रमं मण्डलम् ( शाम्भवम् ) ॥
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकंम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

५, क्लाइव रो,
कलकत्ता-१

वैक्रमाब्दः
२०१३

प्रथमं संस्करणम्
५०००

खैस्ताब्दः
१९५७



GURUMANDAL SERIES No IX

# THE SMRITI SANDARBHA

Collection of Two Major
Dharmashastric Texts Called
Markandaiya & Laugakshi Smritis
by the
Maharshis Markandaiya & Laugakshi

## Volume VI

5, CLIVE ROW,
CALCATTA-1

*Vikram Era*
*2013.*

*First Edition*
*5000*

॥ श्रीः ॥

# अभ्यर्थना

श्री भूतभावन विश्वनाथ एवं माता अन्नपूर्णा की कृपा से स्मृतिसन्दर्भ ( गुरुमण्डलग्रन्थमाला नवमपुष्प ) का षष्ठ भाग धर्मशास्त्र प्रेमी महानुभावों के करकमलों में प्रस्तुत करते हुए हृदय आनन्द अनुभव करता है।

भारतीय संस्कृति द्वारा जो सुसंस्कार भारत देश के सुपूतों में दृढ़ होगये हैं उनका सारा मूल इन स्मृति ग्रन्थों में आमूलचूड़ निवद्ध है। शनैः शनैः भारतीय स्वातन्त्र्य सूर्य की रश्मियों के प्रकाश से सुदृढ़ सुसंस्कार इन धर्मशास्त्रों के ज्ञान प्रसार तथा सृष्टि के प्राण पुराण ग्रन्थों की सहायता से मानव को देवता तथा उससे भी ऊपर नर से नारायण वनाने एवं सृष्टि के प्राणीमात्र के कल्याण में मानव को प्रवृत्त करने में दिव्यचक्षुः प्रदान करेंगे तो मैं अपना यह प्रयत्न सफल समझूंगा।

इस भाग में आये हुए स्मृतिग्रन्थ मार्कण्डेयस्मृति एवं लौगाक्षिस्मृति की हस्तलिखित प्रतियां थियोसोफिकल सोसाइटी, अड्यार, मद्रास के द्वारा सञ्चालित अड्यार लायब्रेरी ( पुस्तकालय ) से प्राप्त हुई वहीं से इनके प्रतिलिपीकरण ( Transcription ) का काम हुआ तदर्थ वहां के डायरेक्टर एवं पुस्तकालयाध्यक्ष महोदय का मैं साभार धन्यवाद करता हूं और आशा करता हूं कि वे सदैव इसी प्रकार कृपा करते रहेंगे। ग्रन्थों की मूल प्रति सर्वथैव जीर्ण, शीर्ण एवं कीटानुविद्ध होने से वार-वार तत्रत्य अधिकारी वृन्द को सानुरोध कम्पीज किये हुए फर्मों को भेजते रहने पर भी त्रुटितस्थानों की पूर्त्ति करना शक्य नहीं हुआ। यह भाग पहले ही सेवा में प्रस्तुत होगया होता परन्तु विभिन्न हस्तलिखित संग्रहालयों से पत्र व्यवहार होते रहने से यही आशा थी कि कुछ और अप्रकाशित स्मृतियां मिलेंगी जिनका प्रकाशित होना आवश्यक था, खेद है, इतने प्रयास करते रहने पर भी मुझे इष्ट स्मृति ग्रन्थों को प्राप्त करने में असफलता हुई। कुछ के नाम ये हैं–

(१) कोकिलस्मृति

(२) पञ्चम भाग में उल्लिखित साठ स्मृतियां (हां, अगस्त्यसंहिता अयोध्या से छपी मिली है, सुरक्षित है)।

(३) गरुडस्मृति। (४) पुष्करस्मृति। (५) शिवस्मृति।

(६) कूर्मस्मृति। (७) और्वस्मृति। (८) सूतस्मृति।

(९) नृहरिस्मृति।

इस कार्य में काशी के पं० दुर्गादत्तजी त्रिपाठी शास्त्री रामघाट, गुरुकुल महाविद्यालय, ज्वालापुर के पं० वदनारायणजी शास्त्री, दिल्ली के श्री आदित्याचार्य शास्त्री एवं पूना के भाण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट (भाण्डारकर प्राच्य शोधसंस्थान) के क्यूरेटर (अधीक्षक) श्री डाक्टर परशुरामकृष्ण गोड़े एम०ए० डी० लिट्० का अमूल्य सहयोग मिला जिससे कुछ अप्रकाशित ग्रन्थों का पता लगा परन्तु कुछेक को छोड़कर उन्हें प्राप्त करने में मुझे पूर्णतया सफलता नहीं मिली। आप विद्वद्वृन्द का पूर्ण सहयोग मिला व कृपादृष्टि बनी रही तो सप्तमभाग में आवश्यक सामग्री उपलब्ध होने से अवशिष्ट मेरे पास सुरक्षित स्मृतियों का प्रकाशन करने का अवसर आसकता है। इस भाग की अपेक्षित त्रुटियों के लिये मेरे पण्डितमण्डल का सहयोग मिलने पर भी सफलता न मिल सकी तदर्थ क्षमा प्रार्थी हूं।

"कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्।"

मार्गशीर्ष शु० ११<br>गीताजयन्ती<br>विक्रमसम्वत् २०१३

कृपाभिलाषी :—<br>मनसुखराय मोर<br>५, क्लाइव रो, कलकत्ता-१

॥ श्रीकृष्णः शरणम् ॥

# सम्पादकीयन्निवेदनम्

श्रीमतां तत्रभवतां विद्वदग्रेसराणां करकमलेषु स्मृतिसन्दर्भग्रन्थस्यगुरुमण्डलग्रन्थमालाप्रकाशितस्य नवमपुष्पस्य षष्ठः पटलः समुपस्थाप्यते। पूर्वभागपञ्चकसम्वलित चतुःपञ्चाशत्स्मृतिभिः सङ्कलनेनात्रत्यसम्पादितस्मृतिद्वयस्य बृहत्संग्रहस्य पञ्चोनषट्सहस्रसंख्याकश्लोकाञ्चितस्य मार्कण्डेयलौगाक्षिनामकस्य योगेन षट्पञ्चाशत्संख्या भविष्यति। नात्र वयं किञ्चिद्वैशिष्ट्यं मन्यामहे यतो भवत्कृपालवलेशात्सर्वमेत्कार्यजातं नानाविधसंस्कृतहस्तलिखितग्रन्थसंग्रहगृहेभ्यः समागतपुस्तकप्रतिलिपीकरणेन सिद्धिङ्गतम्।

अत्रत्यं स्मृतिद्वयं मद्रासनगरान्तर्वर्त्ति "थियोसोफिकल सोसाइटी" इतिनाम्ना प्रथितायाःसंस्थायास्तत्त्वावधाने सञ्चालिताद् अड्यार पुस्तकालयात्सम्प्राप्तम्। [illegible]त्र प्रयत्नसापेक्षे कार्येण शुद्धिशोधनाय प्रवृत्तेऽपि पण्डितमण्डलेऽन्यत्रग्रन्थान्तर[illegible]प्यभावान्न तत्साधु सम्पन्नमिति त्रुटितग्रन्थप्रकटनेऽपि गौरवमङ्किरस्माभिर्भव[illegible]वायामिदं खण्डम्प्रस्तूयते। अत्राक्षरविकलाङ्गता, ग्रन्थापरिष्कृतिरशुद्धि[illegible]ाहुल्यञ्च पदे पदे दृग्गोचरीभविष्यति तदर्थं सारासारविचारकुशला नानाशास्त्र[illegible]विचक्षणा धीधनाः सुष्ठु शोधनार्थम्प्रार्थ्यन्ते यतोऽग्रे "कालो ह्ययं निरवधिर्विपुला च [illegible]थ्वी" इति प्राचीनकविश्रीमन्मुरारिनिगदितवचनेन मन्यामहे यद्भूयसीर[illegible]शुद्धीर्यथासमयं विद्वांसो ग्रन्थान्तरपरिशीलनेन शोधयिष्यन्ति। भगवती[illegible]कृपयाऽग्रे सप्तमभागप्रकाशनाय प्रयत्नः प्रचाल्यते। आशास्महे तत्पूर्तिर्भविता।

श्रीमतां सहृदयधुरीणानां पुनः पुनः साभ्यर्थनं धन्यवादं प्रतिपादयन्तोऽपूर्णताकृते क्षमाप्रार्थिनो वयं विरमामः।

श्रीमतां चरणसेवकाः

[illegible]शुभमिति कार्त्तिक शुक्ल ११
हरिप्रबोधिनी
२०१३ विक्रमाब्दः

गुरुमण्डलग्रन्थमालासम्पादका :—
राजस्थानप्रान्तस्थजयपुरप्रदेशान्तर्वर्त्तिलक्ष्मणगढ़ाभिजन ब्रह्मदत्तत्रिवेदि नवलगढ़ाभिजन
रामनाथदाधीच कजोड़ीलालमिश्रा :—
श्री मोरप्राच्यशोधसंस्थानम्
५, क्लाइव रो, कलकत्ता-१

॥ श्रीगणेशाय नमः ॥

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥

ईश्वर का आदेश है कि सृष्टि के सारे प्राणी मेरी ही आत्मा हैं। इन के द्वारा प्राणी मात्र की पूर्णरूपेण रक्षा का ध्यान रखते हुए अपना भोग—जोकि प्रकृति द्वारा निर्दिष्ट किया हुआ है—भोग। (किसी की भी हिंसा मत करो। सभी प्राणी सृष्टि की परिचर्या में पूर्णरूपेण सहायक हैं) किसी भी प्राणी की सम्पत्ति (धन) हरण करने की मन में भावना भी न आने दो। यही कल्याण का मार्ग है।

वेदश्चैवाभ्यसेन्नित्यं शुचौ देशे समाहितः। धर्मशास्त्रं तथा पाठ्यं ब्राह्मणैः शुद्धमानसैः॥
स्मृतिहीनाय विप्राय श्रुतिहीने तथैव च। दानं भोजनमन्यच्च दत्तं कुलविनाशनम्॥
तस्मात् सर्वप्रयत्नेन धर्मशास्त्रं पठेद् द्विजः। श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्मिते॥
(लघुहारीत स्मृ०)

समाहित मन से शुद्ध देश में वेद का अभ्यास करे। उच्च भावों से धर्मशास्त्रों का पठन-पाठन करे। स्मृति एवं श्रुतिहीन जो मनुष्य हैं उनका भोजन निष्फल व्यवहार अपने तथा कुल के लिये हानिकारक है। अतः यत्नपूर्वक धर्मशास्त्र को पढ़े। महर्षियों द्वारा रचित वेद स्मृति एवं पुराणादि धर्मशास्त्र मानव मात्र के नेत्र (प्रकाश) हैं।

मानवमात्र से मेरी करबद्ध प्रार्थना है कि संस्कृत भाषा पढ़ें। महर्षिप्रधान श्रुति स्मृति आदि का उच्च आदर्श रखते हुए प्राणीहित की भावना से मनन कर सम्यक् ज्ञान की प्राप्ति करें। इसी में अपना कल्याण है।

'कामये दुःखतप्तानां प्राणिनामार्त्तिनाशनम्'

५, क्लाइव रो,
कलकत्ता।

आपका सेवक—
मनसुखराय मोर

श्रीगणेशाय नमः

# स्मृतिसन्दर्भस्य षष्ठभागस्य सूचीपत्रम्

## मार्कण्डेयस्मृतेः प्रधानविषयाः — पृष्ठाङ्काः


| | |
|---|---|
| तत्रादौ—वर्णाश्रमधर्मवर्णनम् | १ |
| ब्रह्मचारिधर्मवर्णनम् | ३ |
| प्रायश्चित्तप्रकरणम् | ७ |
| अवकीर्णिब्रह्मचारिप्रायश्चित्तवर्णनम् | ९ |
| एकविंशतियज्ञवर्णनम् | ११ |
| गृहस्थप्रशंसावर्णनम् | १३ |
| द्विमुखोदकपात्रप्रशंसावर्णनम् | १५ |
| वेदप्रशंसावर्णनम् | १७ |
| संस्कृतभाषामौनविधिवर्णनम् | १९ |
| वेदातिरिक्तमुक्तिसाधननिन्दावर्णनम् | २१ |
| वेदाध्ययनवर्जितस्यपुनर्वेदाधिकारवर्णनम् | २३ |
| संस्काराणां वर्णनम् | २५ |
| स्वकार्यानुकूलपक्षिगमनसम्पादनवर्णनम् | २७ |
| गमने निषिद्धानामागमे यात्रानिषेधवर्णनम् | २९ |
| वेदाध्ययने नियमोल्लङ्घनप्रायश्चित्तवर्णनम् | ३१ |
| मृत्तिकाग्रहणमन्त्रवर्णनम् | ३३ |
| देवर्षिपितृतर्पणविधिवर्णनम् | ३५ |
| गौणमुख्यस्नानभेदवर्णनम् | ३७ |
| होमपदनिर्वचनवर्णनम् | ३९ |
| गायत्रीमन्त्रवर्णनम् | ४१ |

| | |
|---|---|
| प्राणायामविधिवर्णनम् | ४३ |
| सन्ध्यादिनित्यकर्मस्वर्यज्ञानमेवप्रशस्तमितिवर्णनम् | ४५ |
| महोत्सवेषु सम्यग्धनधान्यदानप्रशंसावर्णनम् | ४७ |
| परिषदि श्रोत्रियस्यैवाधिकारवर्णनम् | ४९ |
| सर्वपापोत्तारणे ब्राह्मणानामेववचनप्रामाण्यवर्णनम् | ५१ |
| शूद्रान्नप्रतिग्रहीतृप्रायश्चित्तवर्णनम् | ५३ |
| स्वर्णकाररथकारादिपौरोहित्यनिषेधवर्णनम् | ५५ |
| प्रेतान्नभोक्तुर्निन्दावर्णनम् | ५७ |
| वैश्वदेवसमये समागतानामनिराकरणवर्णनम् | ५९ |
| वेदत्यागनिन्दावर्णनम् | ६१ |
| सर्वधर्मशास्त्रप्रणार्थनकर्तॄणामेकवाक्यतालक्ष्यवर्णनम् | ६३ |
| वेदानां बहुमार्गत्ववर्णनम् | ६५ |
| नानासूत्रमन्थरत्नानामवतरणम् | ६७ |
| भारद्वाजसूत्रनानावेदशाखानावर्णनम् | ६९ |
| नानासूत्राणां शाखाभेदवर्णनम् | ७१ |
| आहिताग्निविषयवर्णनम् | ७३ |
| नानासंस्काराणां वर्णनम् | ७५ |
| उपनयनकालकृतानां पृथक्क्षुरकर्माभाववर्णनम् | ७७ |
| बालानामसद्व्यवहारवर्णनम् | ७९ |
| बालताडननिषेधवर्णनम् | ८१ |
| गायत्रीस्वरूपवर्णनम् | ८३ |
| मध्याह्नकालकर्मवर्णनम् | ८५ |
| ब्राह्मणमहत्त्ववर्णनम् | ८७ |
| प्रायश्चित्तवर्णनम् | ८९ |

| | |
|---|---|
| दानप्रशंसावर्णनम् | ६१ |
| दानस्यापात्राणि | ६५ |
| सेष्टपूर्तवर्णने दानक्रियाद्यधिकारवर्णनम् | ६७ |
| दानफलवर्णनम् | ६६ |
| दानेदेयद्रव्यवर्णनम् फलञ्च | १०१ |
| स्वर्गसुखाधिकारिणां जनाना लक्षणवर्णनम् | १०३ |
| गयाश्राद्धवर्णनम् | १०५ |
| प्रायश्चित्तप्रतिनिधिवर्णनम् | १०७ |
| महादानानां वर्णनम् | १०६ |
| शिखरदानवर्णनम् | १११ |
| गोवृषभादिदानफलवर्णनम् | ११ |
| भूमिदानप्रशंसावर्णनम् | १ |
| कन्यादानफलवर्णनम् | |
| सुवर्णादिनानादानाम्फलवर्णनम् | |
| विशेषदानवर्णनम् | |
| सम्पूर्णदानेषु कन्यादानस्यप्राशस्त्यवर्णनम् | |
| तिथिक्रमेणदानफलं देवतापूजनफलञ्च | |
| न । ॥५६। :क, | |
| नानादानफलानि, | |
| कन्यापितृधर्मवर्णनम् | |
| इष्टापूर्तवर्णनम् | |
| नानामहोत्सववर्णनम् | |
| पात्रापात्रनिरूपणम् | |
| दानपात्रविशेषवर्णनम् | |

षड्विधब्राह्मणवर्णनम् १४५
मधुपर्कयोग्यानाम्वर्णनम् १४७
नान्दीश्राद्धादिषु मर्यादावर्णनम् १४९
आपोशानजलप्रकार १५१
विवाहे पारस्कराणां योग्यतावर्णनम् १५३
एकपङ्क्तिदूषितानां वर्णनम् १५५
पतितस्य पुत्रककर्तव्यश्राद्धविधिवर्णनम् १५७
श्राद्धविधानवर्णनम् १६१
पुत्रत्वयोग्यतावर्णनम् १६३
महालयश्राद्धप्रशंसावर्णनम् १६५
सकृन्महालयश्राद्धकालनिर्णयवर्णनम् १६७
एकोद्दिष्टविधिवर्णनम् १६९
नान्दीश्राद्धमहत्त्ववर्णनम् १७१
पुण्याहवाचनविधिवर्णनम् १७३
मन्वन्तरदिने दानप्रशंसावर्णनम् १८१
पुरोहितप्रशंसावर्णनम् १८३
अग्नौकरणवर्णनम् १८५
श्राद्धे भोजनाचमनकालवर्णनम् १८७
मातापितृश्राद्धस्यावश्यतावर्णनम् १८९
श्राद्धभोजने कृत्यवर्णनम् १९१
श्राद्धविधिवर्णनम् १९३
पितॄणामर्घ्यदानवर्णनम् १९५
स्नुषापाकवर्णनम् १९७
पितृनिमित्तस्य पक्वान्नस्य प्रशंसावर्णनम् १९९

श्राद्धकार्याङ्गक्रमवर्णनम् २०१
विकिरान्नदानवर्णनम् २०३
भोजनमनुनिमन्त्रितब्राह्मणानां पूजनं तेभ्यश्चाशीर्वादवर्णनम् २०५
ब्राह्मणभोजनोत्तरं स्वकुटुम्बसहितश्राद्धसामग्रींगृह्णीयादितिवर्णनम् २०८
परेहि तर्पणवर्णनम् २०९
ब्राह्मणमहिमा ब्राह्मणानांसमागमने शूद्रस्यस्थिनौदण्डश्च २११
ब्राह्मणस्यैव भूदानम २१३
पतिसयोगविकलाया विधवाया वृत्तिष्वनधिकारवर्णनम् २१५
रन्ध्रप्रविष्टक्रियाप्रविष्टयोर्भेदवर्णनम् २१७
उत्तमर्णाधमर्णदण्डवर्णनम् २१९
श्राद्धप्रकरणवर्णनम् २२१

## लौगाक्षिस्मृतेः प्रधानविषयाः

लौगाक्षिविपयकधर्मशास्त्रप्रबन्धावतारः २२३
जातकर्मविधिव्यवस्थावर्णनम् २२५
नामकरणविधिवर्णनम् २२७
वेदप्रतिपाद्यविधेःकर्तव्यफलज्ञापनत्ववर्णनम् २२९
सर्वद्विजातीनां वेदविहितोपनयनकालावधिनिरूपणम् २३१
उपनयनसमयेकृत्यविधिवर्णनम २३३
ब्रह्मचारिभिक्षाप्रकरणम् २३५
उपनयनावधिसमुल्लङ्घितस्य फलानर्हत्ववर्णनम २३७
उत्सर्गोपाकर्मविधिवर्णनम् २३९
दशानुवाकानाम्वर्णनम् २४१
नानानुवाकानामृपिवर्णनम, तैत्तरीयकेचतुश्चत्वारिंशत्काण्डवर्णनम [illegible]

| | |
|---|---|
| अनाश्रमीनैरन्तिष्ठेदितिवर्णनम् | २४५ |
| वंशाभिवृद्धये वरणीयकन्यालक्षणवर्णनम् | २४७ |
| कन्यादानवर्णनम् | २४९ |
| मानदर्शनवर्णनम् | २५५ |
| गङ्गासागरसङ्गमादितीर्थफलकथनम् | २५७ |
| कृतघ्नदोषनिवृत्तये प्रतिकारवर्णनम् | २५९ |
| स्त्रीपुरुषहननमहापापप्रायश्चित्तवर्णनम् | २६१ |
| उत्तमप्रासादकर्मणां सह फलप्राप्तिवर्णनम् | २६३ |
| अन्नारम्भणं प्रश्ने दक्षिणादानवर्णनम् | २६५ |
| औपासनारम्भ | २६७ |
| यज्ञशालावर्णनम् | २६९ |
| नित्यौपासनविधिवर्णनम् | २७१ |
| नैमित्तिकस्य नित्यकर्मणो वैशिष्ट्यकथनम् | २७३ |
| नानाशाखाणां वर्णनम् | २७५ |
| कलियुगधर्मानुसारंधर्माणां विधिनिषेधवर्णनम् | २७७ |
| बाह्यान्तरशौचयोर्निरूपणम् | २७९ |
| दन्तधावनविधानवर्णनम् | २८१ |
| स्नानविधिवर्णनम् | २८३ |
| सन्ध्याविधिवर्णनम् | २८५ |
| सन्ध्यादिप्रकरणेऽर्घ्यादिवर्णनम् | २८७ |
| गायत्रीप्रशस्तिवर्णनम् | २८९ |
| गायत्रीजपारम्भकाले चतुर्विंशतिमुद्रावर्णनम् | २९१ |
| गायत्र्या आवाहनवर्णनम् | २९३ |
| त्रिकालसन्ध्यावर्णनम् | २९५ |

ब्रह्मयज्ञप्रशंसावर्णनम् २६६
देवपितॄणां तर्पणविधानवर्णनम् ३०१
भीष्मतर्पणवर्णनम् ३०३
ॐ नमोनारायणमन्त्रमहत्त्ववर्णनम् ३०५
पीठपूजाविधानवर्णनम् ३०७
विष्णुपूजनकर्मणि नानाविधानवर्णनम् ३०६
दीपदानात्परंनैवेद्यनिवेदनवर्णनम् ३११
आदित्यादिपञ्चदेवपूजनविधानवर्णनम् ३१३
शिवपूजाविधौ श्रेष्ठकालवर्णनम् ३१५
सूर्यपूजायां भूतशुद्धिमन्त्रशुद्ध्योर्वर्णनम् ३१७
सविधिपूजाविधानवर्णनम् ३१६
विष्णोर्निवेदितंग्राह्यमित्यत्रमीमांसा ३२१
नानादेवेभ्य इष्टप्राप्तिवर्णनम् ३२३
दीपप्रशंसा वर्णनम् ३२५
नानाविधिनैवेद्यवर्णनम् ३२७
ब्रह्मचारिधर्मवर्णनम् ३२६
पञ्चयज्ञवर्णनम् ३३३
अतिथिमहत्त्ववर्णनम् ३३५
मृण्मयादिपात्रेषु भोजननिषेधवर्णनम् ३३७
अभक्ष्यवर्णनम् ३४१
पङ्क्तिपावनानांवर्णनम् ३४३
सदाचारवर्णनम् ३४५
भोजनविधिवर्णनम् ३४६
पाकस्य ग्राह्याग्राह्यवर्णनम् ३५३

| | |
|---|---|
| स्त्रीधर्मवर्णनम् | ३५५ |
| श्राद्ध शय्यादानविधिवर्णनम् | ३५७ |
| अग्राह्यान्नभोजने दोषवर्णनम् | ३५९ |
| श्राद्ध निमन्त्रणक्रमवर्णनम् | ३६१ |
| ब्राह्मणभोजने योग्यायोग्यवर्णनम् | ३६३ |
| बालानां कृते श्राद्धविधानम् | ३६५ |
| नित्यानित्यश्राद्धयोग्यवर्णनम् | ३६७ |
| श्राद्धकर्मणि नानाविधानवर्णनम् | ३६९ |
| नानागुरूणाम्यवर्णनम् | ३७१ |
| श्राद्धाङ्गतर्पणवर्णनम् | ३७३ |
| मुहूर्तादिकालनामवर्णनम् | ३७५ |
| श्राद्धानाविवरणम् | ३७७ |
| मुख्यपत्न्या श्राद्धे विधानवर्णनम् | ३८१ |
| श्राद्धे पाकप्रकार | ३८३ |
| मासान्नप्रयचननिषेध | ३८५ |
| अभक्ष्यभक्षणाच्चाण्डालत्वप्राप्ति | ३८९ |
| श्राद्धवर्णनम् | ३९३ |
| शूद्रस्य महादानकरणाद्विप्रसाम्यत्ववर्णनम् | ४०३ |
| वैदिकप्रकरणम् | ४०५ |
| पितृश्राद्धादिषु ज्येष्ठपुत्रस्यैवाधिकारिता | ४०९ |
| सर्वकृत्यानामीश्वरार्पणबुद्ध्यैव फलदायकत्वम् | ४११ |


॥ समाप्तमिदं सूचीपत्रम् । शमस्तु ॥

॥ श्रीगणेशायनमः ॥

॥ अथ ॥

# ॥ मार्कण्डेयस्मृतिः ॥



## तत्रादौ—वर्णाश्रमधर्म वर्णनम्

मार्कण्डेयं ( बहु ) ब्रह्मकल्पदर्शिनमेत्य ते ।
महात्मानः शौनकाद्या सर्वज्ञमृषयोऽब्रुवन् ॥

भगवंस्त्वं बहुब्रह्मकल्पदर्शी विशेषवित् । अतस्त्वं सर्वदेवर्षिः योगिभ्यश्चाधिको मतः ॥
सर्ववर्णाश्रमाचारधर्माधर्मप्रवर्तकान् । जानासि कृतसंवादस्तैरत्यन्तं महात्मभिः ॥
अनेकब्रह्मकल्पानां संप्रदायपरार्थगः । पुनर्वेदार्थतत्वज्ञः क्रियाकल्पविशेषवित् ॥
इतिहासपुराणज्ञः स्मृतितत्त्वरहस्यगः । आपत्कालैककर्तव्यमर्त्यधर्मविभागवित् ॥
दरिद्रसंपत्समयसद्सत्कार्यनिर्णये । परिच्छेत्ता विशेषेण मुख्यामुख्यादितत्ववित् ॥
तस्मात्त्वामधुना सर्वे संघीभूयाभिराद्धयम् । समालोच्यविधानेननिश्चित्य च पुनःपुनः ॥
पृच्छामः सर्वधर्मांश्च कर्तव्यान्मोक्षसाधनान् । सर्ववर्णाश्रमकृते निःशेषयुगसंमतान् ॥
अतस्त्वं कृपयास्मासु तान् सम्यग्वक्तुमर्हसि । इत्येवं स कृतप्रश्नः शौनकाद्यैर्महर्षिभिः
मार्कण्डेयो महाभागः सर्वदर्शी कृपामयः । तर्हि शृणुध्वमित्युक्त्वा स्मितपूर्वं वचोऽब्रवीत्

ब्रह्मादयोऽपि निखिलाः किंचिज्ज्ञा एव केवलम् ।
परं तु तत्र सर्वेषां रक्षोमर्त्या मृतान्धसाम् ॥११॥

तारतम्य तस्य चैषां तद्भिन्नानां च सन्ततम् । अस्त्येव परम तेन गुरुर्नोऽस्य पितामह
सर्वज्ञस्तु स एवैको भगवान् भूतभावन । अज्ञेयोऽत्यन्तनिपुणै सर्वोपायक्रियादिभि
सर्वेश्वर सर्वकर्ता सर्वभर्ता सनातन । सर्वान्तर सर्वान्तर्याम्यय भूताश्रय सम

लोकत्रयाश्रय श्रीमान् पुराणो महानामक ।
अक्षेय शाश्वतो नित्य ध्रुवश्चाव्ययवर्जित ॥
भावशून्यो भावभर्ता कर्तुं चाकर्तुमेव च ।
अन्यथाकर्तुमीशान सच्चिदानन्दलक्षण ॥

करण कारण गुह्य वेदवेद्यमगोचर । सर्ववेदान्तसंवेद्यो जगज्जन्मादिकारणम् ॥
तस्य प्रसादात्सर्वेषां मुक्तिर्वेदोदिता शिवा । सायुज्यनामिका दिव्या भवेदिति मनुश्रु
प्रसादस्तस्य कथित वेदोक्तैर्नित्यकर्मभि । एकविंशतिसंख्याकै अतिशीघ्रफलप्रदै
अतिशीघ्रफल चापि चित्तशुद्धिरितिस्मृतम् । तेन ज्ञान भवेद्दिव्य ज्ञाना श्रवणतो महत्
मननादि क्रमेणैव तस्माद्वेदोदितानि वै ।

## कर्मणा मुक्तिसाधनताविचारः

कर्माणि ब्राह्मण कुर्यादय मार्गो महान् शिव ।
मुक्तिर्नान्यास्ति सरणि ज्ञानमेवैकमुच्यते ॥
तस्मै सर्वाणि कर्माणि तप कृच्छ्रादिकान्यपि ।
कुर्वन्ति सुमहात्मान तानि स्युश्च विरम्भत ॥

एतत्कार्यकराणीति प्राहुर्ब्रह्मविदोऽखिला । न कर्मणा न प्रजया त्यागेनानशनेन च ।
तीर्थयात्रादिकेनापि मुक्ति सायुज्यनामिका । भवेदेवेति किं तानि साधकान्यतिदूरत ॥
न साक्षादिति वेदानां हृदय तन्निबोधत । केचित्तु प्रवदन्त्यत्र वेदोक्तान्यखिलान्यपि ॥

नित्यान्येवेति तत्रीतिज्ञानि यदि चेतसा ।
नैमित्तिकानि काम्यानि सर्वत्रापि मन परम् ॥

प्रधानमिति विज्ञेय तस्मादेव विचक्षण । कृष्णार्पणधिया नित्य यजेश सन्तत विभुम्

नित्यैः नैमित्तिकैः काम्यैः कर्मभिः श्रुतिचोदितैः ।
कामनारहिताः सन्तः यजन्ते श्रद्धयान्विताः ॥
ब्रह्मार्पणधिया भक्ताः तज्ज्ञप्त्यै ब्रह्मवादिनः । यजनं गृहिणामेव धर्मोऽयं वनिनामपि ॥
न यतीनां वर्णिनां च यतिनां ब्रह्मचिन्तनम् । श्रवणादि क्रमेणैव वर्णिनां सन्ततं परम् ॥

## ब्रह्मचारि धर्माः

वेदाध्ययनमेव स्यादग्निकार्यं च कालयोः । वासो गुरुकुलेष्वेव नित्यं भिक्षाटनं परम् ॥
बन्धूनां सूतकं तस्य जननान्मरणादपि । न भवेदेव नितरां पित्रोस्तु मरणे पुनः ॥
सूतकं तावदेवस्याद् यावत्तत्क्रियते शुभम् । पिण्डदानादिकं कर्म तत्परं भिक्षयैव हि ॥
प्राणयात्रां प्रकुर्वीत तथाप्येषु दिनेषु चेत् । कुर्यादध्ययनं नैव वासो गुरुकुले भवेत् ॥
एवं मातामहस्यापि तत्पत्न्याश्च विशेषतः । पितृव्यस्याप्यपुत्रस्य तत्पत्न्या भ्रातुरेव च ॥
अग्रजस्य च तत्पत्न्याः सपत्नीमातुरेव च । तात्कालिकं सूतकं स्यात् पितृश्राद्धदिनेऽप्ययम्
भैक्षेण पितृशेषं तद् भुञ्जीयादिति तत्क्रमः ॥

## यतिधर्माः

मातुर्मात्रं यतेर्धर्मः कर्मणः करणं स्मृतम् । तनयान्तरराहित्ये चयनान्तं च तत्परम् ॥
केचिद्दाहान्तमित्यूचुः तद्दिने केवलं पुनः । करपात्रेण दर्शेऽपि प्राणयात्रा विधीयते ॥
तस्यापि सूतकं तावत् यदा वा कर्म नान्यथा ।
वर्णिनः सूतकाभावः तद्भिक्षानिरतस्य सुः (तु) ॥
तादृशं नियमं त्यक्त्वा विद्यमानस्य सूतकम् । भवेदेव न सन्देहो वर्णिनोऽपि निरन्तरम्

## पुनर्ब्रह्मचारिधर्माः

भिक्षाचर्या च तद्धर्मः संतताध्ययनं तथा । नित्यं गुरुकुले वासो वह्निकार्यं च कालयोः ॥
एतान्येव प्रधानानि चैतत्तुल्यानि कानिचित् । अजिनं मेखला दण्डः कौपीनं शुद्धमम्बरम्
मेखला सा त्रिवृत्प्रोक्ता मौञ्जी विरचिताद्यथा ।
कटिसूत्रं तथान्यद्य जन्मादि द्वादशाब्दकात् ॥

तत्पोपकरस्तत्प्रदाता सत्यमेतन्मयोदितम् । वेदाभ्यासी तु यो वर्णी सततं तत्परो वसेन्
...चारः साग्निकार्यश्च सोऽग्निर्वै कव्यवाहनः । यदन्नं वर्णिकुक्षिस्थं वेदाभ्यासेन जीर्यते
कुलं तारयते तेषां दशपूर्वान् दशापरान् । भिक्षाश्येव भवेन्नित्यं वेदाध्ययनकालके ॥
एकत्रान्नं न भुञ्जीयादिच्छया केवलेन वै । पितृव्यपत्न्या मात्रा च मातुलान्या तथैव च
पितृष्वस्रा भगिन्या च गुर्वाचार्यकलत्रकैः । महद्दत्विगुपाध्यायमातामहसती(स्त्री)जनैः
दत्तं तु यच्चवेदन्नफलभक्ष्यरसादिकम् । अतिप्रीतिस्नेहपूर्वं सर्वं ग्राह्यं न चान्यतः ॥
आपत्सु यत्र कुत्रापि येन केनाप्युपायतः । सज्जनेष्वेवोदरस्य पूर्तिमेकत्र शस्यते ॥
बहुस्थरान्नागमस्य सिद्धे सति कदाप्ययम् । नैकत्र प्राशनं कुर्याज्जामिता रहितश्चरत् ॥
दूषितान्नानि सर्वत्र त्याज्यान्येव विपश्चिता । श्रोत्रियान्नानि यत्नेन सेवेतैव सदाचरन्
बहु सद्मसु तिष्ठत्सु भक्तिमत्सु सतां वदा । सर्वत्र कालयोर्नित्यं गृह्णीयाद्भैक्षमुत्तमम् ॥
मातृभिक्षातिशस्ता स्यात् गुरुदारविव(स)र्जिता । प्रजावतीकरकृता पितामह्यादिकल्पिता
मातुलानी प्रीतिपूर्वप्रदत्ता भगिनीकृता । मातृष्वस्तृप्रदत्ता या सती साध्वी प्रकल्पिता

तत्सोमपीथिनिहस्तविसृष्टा व्रतिनी कृता ।
सर्वा एव सदा ग्राह्या न संत्याज्याश्च सन्ततम् ॥
अतिप्रीत्यैव संग्राह्याः पीडयित्वा कदाचन ।
आक्रोशयित्वा तूष्णीकं गत्वा वापि पुनःपुनः ॥

न संत्यजेत्प्रीतिदत्तां दुःखदत्तां परित्यजेत् । बालानां वर्णिनां वेद चेतसामन्यदेशिनाम्
कृपया याः प्रयच्छन्ति सम्यग्भर्तुरनुज्ञया । पृथुकान् भक्षणार्थाय राजान्विष्टं करम्भकान्

विविधानि च भक्ष्याणि गुडं धानापरिक्कान् ।
चणकान् गुडसंयुक्तान् मुद्गरांस्तिलसुंदरान् ॥
शष्कुलीकलिकान् नारान् मुणकान्मुड (र) वान्पुनान् ।
गौडान् सात्ययुतानरम्यान् तान्पुत्रान् दीर्घजीविनः ॥

लभन्ते तनयान्नूनं तेषां चेदवमानतः । विनैव करणं सद्यः चिराद्वंशक्षयो भवेत् ॥
प्रतिजन्मनि वन्ध्या स्याद्रण्डा नष्ट प्रजा तथा । वेदार्थी तुष्टिमात्रेण वर्धन्ते सर्वसंपदः ॥

अकिञ्चनत्वं कार्पण्यं वन्ध्यात्वं पञ्चतुचिता । तथा प्रमादमालस्यं अपमृत्युश्च नश्यति।
विद्यार्थी बुद्धिरहितो बाल्येन यदि चेष्टया । कृत्याकृत्यपरिज्ञानवैकल्येन च मौढ्यत ।
अश्रुतं तु श्रुतं वापि पारुष्यं दुष्टभाषणम् । अकार्यमनृतं फल्गु वाक्यं तुच्छप्रभाषणम् ।
कुर्वन्नपि न निग्राह्यो हन्ति यावद्भवेदसौ । स्वपुत्रवद्रक्षणीय षोडशाब्दात्परं तु चेत् ।

निग्राह्य स्याच्च चेन्नूनं शक्त्या पाल्य सदैव हि ।
द्विदशाब्दात्परं वर्णी बुद्धिमान्यदि केवलम् ॥
सर्वान् वृद्धान् गुरून् विप्रान् श्रोत्रियान् सत्कलत्रिकान् ।
यज्विनो दीक्षितान् पौण्डरीकप्राक्षारत्यकाम् सत ॥

नित्याग्निहोत्रिणश्चापि ज्ञानिनो वेदिनस्तुचीत् । शास्त्रिणश्चापि(से)वेतदण्डहस्तश्चरेदपि।
नैकत्र प्राशन कुर्यान्मौञ्जीकृष्णाजिन धरम् । न लङ्घयेन्मातृवाक्यं पितृबन्धुसतामपि ॥
गुर्वाचार्यज्ञानिना च श्रोत्रियाणा च शास्त्रिणाम् । पितृकर्तृकरव्येषु सदाहूतो भवेद्यपि

तच्छिष्टान्न तु भुञ्जीयात्तद्वाक्यं नातिलंघयेत् ।
नान्यत्र पितृशिष्टान्नमश्नीयात्कामत स्वयम् ॥

विप्राभाव श्रोत्रियाणा पैतृकेषु निमन्त्रित । दैवस्थानस्थितो हव्यं प्राश्नीयाद्विप्रकाम्यया

आचार्यवाक्यतस्तेन न स्वयं स्विच्छया पितु ।
विप्राभावे कदाचित्तु श्राद्धकृत्येषु केवलम् ॥

वर्णी वर्तकमाङ्गेषु स्थानस्थोऽपि भवेदपि । आपत्सु गृहकृत्येषु प्रार्थितस्तेन चेदपि ॥
स्थानस्थितो भवेन्नूनं न सर्वत्र कदाचन । इच्छया श्राद्धभुग्वर्णी ब्रह्मचर्याच्च्युतो भवेत्

आपत्स्वपि कदाचिद्वा गर्जहोमादिना परम् ।
नक्षत्रजीवी न भवेत् गृही वस्त्रं न धारयेत् ॥

यदि स्यात्तादृशो मूढो रौरव नरकं व्रजेत् । परेषां सर्वकृत्यानां भाय योग्यो भवेदपि ॥
तद्दोषस्य विनाशाय दिनत्रयमुपोष्य वै । गायत्रीदशसाहस्रं जपेत्तेनशुचिर्भवेत् ॥
यदि वर्णी शूद्रगृहे आमं पैतृककर्मणि । गृह्णीयात्तत्क्षवा मद्य पुन संस्कारमर्हति ॥
स्वादयेद्यदि ताम्बूलमशनादिच्छया सकृत् । त्रिरात्रयावकाहार पञ्चगव्येन तत्परम् ॥

चतुर्थेऽह्नि शुध्येत धेनोर्दक्षिणया तथा । गन्धधारणतः पुष्पधारणाच्छिरसा सकृत् ॥
सद्यः शूद्रत्वमाप्नोति तस्य शुद्धिरियं स्मृता । समुद्रगानदीस्नानदशकं जप एव च ॥

षट्सहस्रं च गायत्र्याः नैष्ठिकी ह्यत्र दक्षिणा ।
भुक्तिकाले वर्णिनां स्याद्दयं धर्म (:) पितुर्गृहे ॥

ललाटहृद्बाहुमूलस्थानेऽल्पेनैव केवलम् । स्याच्चन्दनेनानुलिप्तस्तद्वत्तेनैव नान्यथा ॥
माता पिता वा पुत्रैकवात्सल्येन महेष्वपि । हिरण्यरत्नरजतभूषणालंकृति यदि ॥
कुर्यातां तस्य दोषो न तदन्ते च पुनस्त्यजेत् । पितृमातृकृतं यत्तद्वर्णिनामधिकोत्सवे ॥
स्वर्णालंकरणं रत्नरजतादिकृतं तथा । श्रेयस्कारकमित्येव प्रवदन्ति मनीषिणः ॥
सुगन्धपुष्पाञ्जनतः सद्यः पतति तत्क्षणात् । स्वधृतात्कामकारेण वर्णी स्वादर्शनादपि

आदर्शस्येक्षणादस्य चित्तं शास्त्रं विनिश्चितम् ।
त्रिषा(सा)हस्रकगायत्री जपं एव न चापरम् ॥

शरीरोद्वर्तनात्सद्यः वर्णी स्यात्किल्बिषी क्षणात् । तद्दोषपरिहाराय गायत्र्यष्टसहस्रकम् ॥
नदीस्नानात्परं शुद्धः जपेत्सूर्यमुपस्थितः । दन्तधावनतस्त्वेवं सकृत्काष्ठमुखेन चेत् ॥
गुरुद्रोहमवाप्नोति दुश्चर्मा च भवेदपि । तस्य चित्तमिदं ज्ञेयं ब्रह्मकूर्चं विधानतः ॥
एकरात्रोपवासश्च ब्राह्मणत्रयभोजनम् । वेदे श्रमं विनान्यत्र करोति यदि वाडवः ॥
सद्यः शूद्रत्वमाप्नोति विप्रत्वेन च हीयते । परिहारस्तु तस्याथ येन केनाप्युपायतः ॥
शाखामात्रं साधयेद्वा शिष्टं वामास्तु तावता । नष्टं यद्यत्तु विप्रत्वं विरोहत्यपि तावता
उपनीतो ब्रह्मचारी वेदत्यागप्रपूर्वकम् । कुर्यात्तर्के श्रमं तेन वैणत्वं प्रतिपद्यते ॥
काव्यालापादि पठनात् सन्ध्यात्यागैकपूर्वतः । यवनत्वमवाप्नोति कालसूत्रं च गच्छति

नाट्यालंकारभरतज्योतिश्शिल्पिरसादितः ।
वर्णी च्युतस्तु मुण्डित्वं रजकत्वं च विन्दति ॥

पुराणस्मृतिषु(मा)त्रार्थज्ञानयत्नेन केवलम् । लेख्यत्वगणकत्वाभ्यां सूतत्वं प्रतिपद्यते ॥
तस्माद्द्विजो जातमात्रः कृतोपनयनस्ततः । कृतवेदारम्भणोऽयं श्रावण्यां तु गुरोर्मुखात्

स्वाध्यायोऽध्येतव्यः स्यादिति वेदानुशासनम् ।
काण्डोपाकरणे चापि काण्डानां च समापने ॥

भाष्यत्वादपि तेषां स्याद्वर्णिनां गुरुकर्म [illegible] । क्षुरं यथाहितस्याग्नेर्वा प्रतिपर्व मुनीरितम् ।
तथोपाकरणे चापि समापनकर्मणि । गुरुकर्म च सम्प्रोक्तं सर्वेषां ब्रह्मचारिणाम् ।

नान्यकालस्मरः तेषां आकृष्य तस्य कीर्तितम् ।

न नष्टानां कृतास्याः स्यात् न दृष्टोपायन तथा ॥

एकैकस्तूपाकृतावाद्दशाहादेव न स्यात् पापकम् । स्थानमेनावहं सर्ववर्णिनां मन्त्रम् स्मृतम्
गुरुभक्तो मुनिप्रायः स्नातः पश्चात्पुनः स्मृतम् । मन्त्रग्रहणं पुनः कार्यमथमर्पणपूर्वकम् ॥

यदि वर्णी गृही कर्म क्रियमाणं करोति चेत् ।

पुनर्मिष्टन् जडो दुष्टो प्रायश्चित्तीयते किल ॥

गोमयहरमत्रैव यावमात्रं दिनत्रयम् । पुनश्च यावकाहारः पञ्चमात्रं हरिं स्मरन् ॥
पुनर्दीक्षामनुष्ठ दशमाहस्य मलपया । मासमात्रं द्विषा(सा)हस्य अपत्र शुद्धिमाप्नुयात्

काण्डा स्युर्वेदमन्त्रस्याद्या प्राजापत्या महत्तरा ।

सौम्याग्नेयादयः कथिता आग्नेया समकीर्तिता ॥

वैश्वदेवा षोडश स्युः शिक्षा काण्डमध्यगा ।

एते चतुर्धा चाशिरा सप्ताख्या वेदकाण्डका ॥

उपक्रमोत्सर्जनयोः तेषां तु गुरुकर्म वै । वर्णिनां कथितं सद्भिर्धर्मज्ञैर्ब्रह्मवादिभिः ॥
संहिताध्ययनं पूर्वं पदाध्ययनमेव वा । पश्चात्क्रमस्याध्ययनं तत्र यं चार्थसिद्धये ।
संहिताध्ययनात्पूर्वं पदानां संशयो भवेत् । पदाध्ययनमात्रेण क्रमस्याध्ययनं विना ॥

क्रमाधीना संहिता स्यात् पद च तस्मात्तु तत्त्रयम् ।

सम्यगध्ययनं कुर्यान्न चेद्वैफल्यता भवेत् ॥

संहिताऽध्ययनान्मन्त्रमात्रसिद्धिर्भविष्यति । तदर्थज्ञानसिध्यर्थं पदाध्ययनमुच्यते ॥
पदसन्धिस्वराणां च योगस्य पदगणयोः । सिद्ध्यर्थं तत्क्रमस्यास्याऽध्ययनं विधिपूर्वकम्
चोदितं तद्द्वयस्यैवं योऽस्तु पदयोः पुनः । वारत्रयोच्चारणैकरूपाया वेदकर्मणः ॥
अनुष्ठानुमशक्तानां वेदिनां केवलं तराम् । प्रधानयोगारम्भस्य हेतुभूतासु तासु वै ॥
सामिधेनीषु तद्वत्तु तासु पञ्चदशास्वपि । प्रथमोत्तमयोर्योगे त्रिराह्वेति विधिर्बलात् ॥

त्रिः प्रथमामन्वाहेति वाक्यतस्तु त्रिरुत्तमाम् । शंसनीयस्य कार्यस्य यत्फलं जायते तदा
महानपूर्वः कलिहा तत्तुल्यफलसिद्धये । जटैषा श्रुतिवाक्येन वेदे वाजसनेयके ॥
प्रोक्ता सैपेत्युपक्रम्य तस्मात्कृत्स्नस्य तस्य वै । सम्यगध्ययनं प्रोक्तं तत्तत्त्वज्ञैर्महात्मभिः

## अवकीर्णिब्रह्मचारिप्रायश्चितम्

## गर्दभालम्भनम्

ब्रह्मचारी यदि हठात् प्रमादाद्वाऽतिमोहितः ।
रमामुपेयात्पापी स्याद्ब्राह्मण्याच्च्यवते च सः ॥

प्रायश्चित्तमिदं तस्य गर्दभालम्भनं स्मृतम् । तदालम्भनकृत्यस्य वह्नीनां सिद्धयेऽस्य वै ॥
कुर्यान्नैमित्तिकाधानं सर्वसंभारवर्जितम् । अरण्याहरणादि स्यात्तथा ब्रह्मौदनं च वै ॥
तदग्निकार्यं वह्नौ स्यात्तदिष्ट्यन्तं समाचरेत् । तदग्नौ तं पशुं कुर्याद्यूपस्तत्र तु वैणवः ॥
वैकंकतो लोहितो वा पाशुकं कर्म तत्र तत् । भवेदेव विधिस्तस्य कृत्स्नः शिष्टोऽपि वेदगः

छि(छ)त्रापिधानी सा कार्या दध्ना क्षीरेण वा तथा ।
मधुना वाम्भसा नैव विशेषोऽयं प्रकीर्तितः ॥

सर्वेषामवदानानां होमः कृत्स्नो भवेत्पुनः । स्रुचः सर्वाः पूरयित्वा विधिनैव पुनःपुनः

पुरोऽनुवाक्या याज्याभ्यां याजमानोक्तिपूर्वकम् ।
न विद्युद्वृष्टिरत्रास्ति सर्वमन्यत्समं भवेत् ॥

प्रत्येकं शतनिष्काणां दक्षिणा चात्र चोदिता ।
कर्मान्ते ऋत्विजां षण्णां क्षुरकर्मप्रपूर्वकम् ॥

अवगाहस्तु विहितः ब्रह्मकूर्चं च धर्मतः । प्रसर्पकाणां सर्वेषां दिनत्रयमुपोषणम् ॥
तद्वह्निशमनात्पश्चात् ऋत्विजस्तत्र वाडवैः । दशभिस्तत्र तद्भूमेः शुद्धये शान्तिकर्म तत्
आरभेयुर्विधानेन बौधायनविधानतः । क्रियामुदकशान्ताख्यां तत्परं निखिला अपि ॥
स्नात्वा तन्मन्त्रसलिलैः धृतयज्ञोपवीतिनः । स्नानतच्छिष्ट सलिलैकदेशेन ततः पुनः ॥

आपः पुनन्तु पृथिवीमिति मन्त्रेण तद्भुवम् ।
प्रोक्षयित्वा विधानेन तद्भूमिं तदनन्तरम् ॥

आत्मान पृथिवीं चापि पृथिवी पूता पुनातु माम् । इत्यनेनैव यजुषा तज्जलाक्षणपूर्वकम
अभिमन्त्रयेत् चात्मानं पृथिवीमपि शुद्धये । दश ते ब्राह्मणान् पश्चात् पुनन्तु ब्रह्मणस्पति
इत्यनेनैव मन्त्रेण ऋषिन्तरतान्विधानत । पदपि प्रोक्षयेयुश्च पतितश्च पदुन्त्विदम् ॥
जायेकत्वचन कथित शाखाया पतयस्त्विमे । अग्निर्वायुश्च सूर्यश्च ब्रह्मा चैव प्रजापति
चन्द्रमा स्यात्ततो भूय नक्षत्राणि मतश्च वै । सवत्सरश्च वरुणश्च वरुणोऽहस्त्रयश्च ॥
एकादशैते तदेवा पतयश्चापि ते स्मृता । ते ब्राह्मण पुनस्तेरेव द्वितीया ब्राह्मण पदम् ॥

ततो भूया ऋत्विजस्तु त्र्याहारयुक्तिप्रपूर्वकम् ।
तथाग्निरित्यान्मन्त्रान् पुरोक्तान् तमिमिरत ॥

आदित क्रमतोऽयस्या तद्विहानात्तु सन्निधौ । अनन्तरश्चिन मन्त्रो ब्रह्मपूता पुनातु माम्
जपेयुरभिमन्त्रयैव पूतात्मा पद तथा । अन्वय ब्रह्मणोऽन्यपदस्यैव विशेषणम् ॥
एव चतुर्णां मन्त्राणामत्र यानां विधानत । विनियोग प्रकथित प्रसगात्तदनन्तरम् ॥
यदुच्छिष्टेति मनुना प्राशयेयुश्च तज्जलम् । शिष्ट कुम्भस्थित पूत वहिरुच्छतिरितीरिता
एवमत्यन्तदुच्छ स्याद्दर्शिनश्चित्तमुच्यते । एतावन्मात्रमेव स्याच्चिरतं तु ब्रह्मचारिणाम्
एतत्र भूयस्त्वधिक चरित यदि वै तदा । न शक्यते विधानाय प्रायश्चित्तासहस्रत ॥
अथापि ते पुनर्देया ब्रह्माण्डकटहादिभि । महादाने पवित्रा स्युरित्येव ते महर्षय, ॥
दयावन्तो महाविज्ञा अत्रु किल समासत । अत्यन्तकठिन तादृगनुष्ठान महापदे ॥
कतु शक्य प्रभवति यतिश्चदेषु कर्मसु । पतितस्तैव कथित निष्कृतिरतश्च नैव च ।
आरूढ पतितो ज्ञेय पुनरुद्धरणाक्षम । आश्रमेषु तु सर्वेषु प्रवरस्तुलभोगृही ॥
प्रायश्चित्तक्षमश्चापि चिरं चारयातिसुक्षमम् । अत्यन्तसुलभ चापि गृही तस्माद्वर पर
तरत्यसावुपायेन ससार दुर्गति पराम् । अज्ञान वृजिन घोर तरणस्यास्य भूरिश ॥

उपाया सुलभा रम्या ते चात्रापि समासत ।
निरूप्यन्ते केचिदत्र कृच्छ्रदानादिरूपिण ॥

क्रियातपोजपस्वाध्यायादिरूपा परे पुन । तेष्वत्र सुलभोपाया बहुत्र पारितस्वरूपक
श्रुत्युक्ता ब्रह्मविज्ञानहेतुभूतोऽद्भुत पर । स एक एव नितरां मुक्त्येऽज नरस्य वै ॥

वह्न्युपास्तिर्बहुविधा श्रुत्युक्ताखिलशास्त्रगा। एकविंशतिभेदेन कीर्तिता यज्ञनामकाः॥

## एकविंशतियज्ञाः

ते यज्ञास्त्रिविधाः प्रोक्ताः पाकयज्ञादिनामकाः।
हविर्यज्ञाख्यकाश्चेति सोमसंस्थाह्वयास्तथा॥

एते नित्या इति प्रोक्ताः करणेऽभ्युदयावहाः। चित्तशुद्ध्यैककरणास्तद्द्वारा ज्ञानसाधकाः
अकरणेऽत्यन्तदोषाणामालया नरकप्रदाः। तस्मादेतानि कर्माणि नरः कृत्वा प्रमुच्यते॥
क्रमेणैतानि विधिना चेत्कृतानि मनीषिभिः। यावज्जीवं च धर्मज्ञैः अन्यूनानतिरिक्ततः
जन्मन्यस्मिन् महद्ज्ञानं चित्तशुद्धिमुखेन वै। जायते मननस्यापुनर्जन्मान्तरं ध्रुवम्॥

पश्चान्निदिध्यासनस्य पुनर्जन्मान्तरं भवेत्।
सायुज्यं च भवेत्तस्मिन्निदिध्यासनजन्मनि॥

अत्यन्तसुलभोपायः मार्गोऽयं वेदबोधितः। औपासनोपक्रमदिवसमारभ्य तत्क्रमात्

कर्माणि यानि चोक्तानि नित्याख्यान्यधुना मया।
कृतानिचेत्तत्क्रमेण ब्राह्मणस्य महात्मनः॥
जननेभ्यश्चतुर्भ्यः स्यान्मुक्तिस्सायुज्यसंज्ञिका।
तत्तत्कर्मानुष्ठानस्य यत्किंचिद्वाऽधिकं तु वा॥

वैकल्यमन्तरायो वा यदि जायेत वै पुनः। जननेभ्यश्चतुर्भ्यो न भवेन्मुक्तिस्तु किं पुनः

जन्मानि कानिचिद् भूयो लब्ध्वा कर्मानुरूपतः।
प्रतिपक्षकृताभ्यां वै यावज्जीवं समन्त्रतः॥

मुक्तिस्सा जायते नूनं ब्राह्मणस्यैव धीमतः। श्रवणं मननं चापि निदिध्यासनमेव च॥
श्रुतिवाक्यैर्गुरुमुखात् भवेयुः किल नान्यथा। अधिकारी श्रुतेर्यस्तु स हि मुक्त्यैकभाजनम्
श्रुतिं विना न मुक्तः स्यादयमेव महान् परः। मार्गोऽयं कथितः सद्भिस्तया श्रुत्या च सर्वतः
न कर्मणा न प्रजया न संन्यासेन दानतः। तपसो धनतो वापि नापि तीर्थादिचर्यया॥
तान्येतानि च सर्वाणि साधकान्येव केवलम्। परंपरतया साक्षान्नैवेति श्रुतिराह हि

एतन्मार्गं विना मुक्तेर्न तु मार्गान्तरं क्वचित् ।
ज्ञानमेव परो मार्गः श्रुतिवाक्यैकज [?] तत् ॥

औपासनाचित्तशुद्धिर्जन्मभिस्त्रिशतैर्भवेत् । कालद्वयकृतान्नित्यं प्रातस्सायं विधानतः
दर्शेण पौर्णमासेन जन्मभिस्त्रिशतैस्तथा । चतुःशतैर्जन्मभिः स्यात् तदाग्रयणकर्मणा
पञ्चाशदुत्तरशतजन्मभिः स्यान्मृता तथा । मुक्तिरष्टकयाद्विर्या मासिश्राद्धेन तत्परं
तद्वेति मनुः प्राह सर्वसत्या सत परम् । तत्त्रिरादुत्तरशतजन्मभिः सेति चार्यमा
एतेषां कर्मणां प्रतिवर्षं चावृत्तिरिष्यते । कर्मणः सप्तमस्याथ नावृत्तः प्रतिवत्सरम् ॥
एकवारं जन्ममध्ये करणं तस्य वैधतः । मासि श्राद्धस्य चेत्प्रतिमासं चेति पितामहः ।
श्रुतिस्मृतिपुराणानि शास्त्राणि च तथा अगुः । प्रतिसंवत्सरं चैकवारं वाऽसमितित्रयं ।
कात्यायनः कठगया कण्वः कुत्साद् यन् खलु । तस्य शूलिगवस्यास्य करणादेकदैवहि ।
सर्वक्रतुफलं सद्यः सर्वतीर्थावगाहनात् । सर्वव्रतानुष्ठानाच सर्वकृच्छ्रैकचर्यया ॥
सर्वदानशताच्चापि यत्फलं तत्फलं क्षणात् । अवश्यादेव लभते पञ्चाशज्जन्मभिः शिव
चित्तशुद्धिर्भवेदेव संशयो नात्र पश्चिम व । अग्निहोत्रादिभिस्तैस्तु हविर्यज्ञैः श्रुतीरितैः ।
शताशीतिनवत्येक षष्टित्रिंशद्द्वयोरपि । पञ्चाशदेकपञ्चाशत् सङ्ख्यया सेति निश्चयः ।
त्रिंशदेकोनत्रिंशत्क सप्तविंशतिवाधकैः । लाघवाय धैरेव (?) चित्तशुद्धिरिति श्रुतिः ।
इत्येवं भगवानाह देवदेवः प्रजापतिः । कृतानि कर्माण्येतानि नित्यनैमित्तिकान्यपि ॥
महान्ति पापसङ्घातनिघ्नैर्नान्तरितानि चेत् । उक्तकालैकफलदानि स्युरत्र न संशयः ॥
न चेत्कर्मानुगुण्येन फलदानि भवन्ति हि । अतः सदा सत्कर्माणि कुर्वन्नित्यमतन्द्रितः

सत्त्वेव सन्ति कर्माणि जाग्रत् तिष्ठेदतन्द्रितः ।
अतस्सत्कर्मणः स्याद्धि चित्तशुद्धिरनुत्तमा ॥

उक्तकालेनाचिरेण मुक्तिर्यत्स्यात्तदुर्लभा । ब्रह्मादीनां निर्जराणां ते परन्त्वधिकारिणः ॥
ते ज्ञानिनोऽपि नितरां महदैश्वर्यचेतसः । कर्माणि चक्रुः श्रुत्युक्तकाम्यनैमित्तिकान्यपि

तदिच्छयातस्ते सर्वे ज्ञानिनोऽप्यधिकारिणः ।
जीवन्मुक्ता इति ज्ञेयाः शुद्धचित्तेन ये विभुम् ॥

भगवन्तं यजन्ते वै कामनारहिताः शिवाः। कृतकृत्यास्तु ते ज्ञेया गुह्यमेतन्मयोदितम्

## गृहस्थाश्रमप्रशंसा

सर्वार्था गृहिणो नित्यं सिध्यन्ति च फलन्ति च।
अतस्तथाविधस्सद्भिः सततं ब्रह्म चिन्तयेत्॥

कलौ तु केवलं वच्मि गार्हस्थ्यं ह्युत्तमोत्तमम्। ततस्सन्नेव यत्नेन कृतकृत्यो भवेदिति
श्रुतेस्तद्धृदयं नूनं चतुर्थाश्रमतस्तु चेत्। अवशादेव निपतेदारूढपतितस्स तु॥
तस्माद्गृही सन् सततं कर्मब्रह्मपरो भवेत्। यद्यप्यस्मिन्नाश्रमे तु वैकल्ये सति केवलम्

निष्कृतिस्सुलभा दृष्टा सर्वशास्त्रेषु नैकधा।
आदावविद्वान् गार्हस्थ्ये विद्यमानोऽप्ययं सदा॥
अशुचिर्दुष्टबुद्धिर्वा पित्रा बाल्येऽप्यशिक्षितः।
तेनापि मौढ्यान्मोहाद्वा वेदाध्ययनवर्जितः॥
किंचित्किंचित्तत्तत्सन्ध्यामुखकर्मादिकृत्तथा।
शौचाचारादिहीनोऽपिपुनस्तन्मानसोऽप्यति॥

पुनस्सज्जनतद्वाक्यसदाचारादिभिर्युतः। पञ्चयज्ञापरित्यागी सदौपासनवर्जितः॥
पितृमातृसुहृद्भ्रातृ गुरूनिन्दैकमानसः। पुनस्तद्भक्तियुक्तश्च दैवयोगात्तदा तदा॥

नित्याशुचिःकामचारी नित्यं सज्जनबाधकः।
शौचबुद्धिः सदाचारः मनोमात्रश्च केवलम्॥

प्रीत्यप्रीतिस्सज्जनेषु कालभेदेन सन्ततम्। जनपीडापोषणैक मानस(:)काल भेदतः॥
पुण्यपापपरिज्ञानवानस्पत्यन्तदोषकृत्। स्वकार्यैकपरत्वेन कृत्याकृत्यादिवर्जितः॥
स्वकार्यसाधने प्राप्ते गुणदोषाद्यचिन्तकः। स्वबन्धुवर्गसन्मित्रकुलस्त्रीगुह्यसंगकृत्॥
स्वमित्रजनसद्द्रव्य कृतव्यामोहमाप्यति। बहिर्महानदीस्नानतत्परोऽपि प्रभुत्वतः॥
यत्रावलोकनविनिर्गमनद्वयवानति। अपि वैदिककर्मौघमानसोऽप्यलसः पुनः॥
जनवाक्यैकसंप्राप्तसत्कर्मस्वतिभक्तिमान्। अक्षम(:)कर्मकालेषु संप्राप्तेष्वतिलोभतः॥
अत्यालस्यादिनात्यन्तनित्यचापल्यतस्तथा। कर्मोपयुक्ततन्मात्रसन्ध्यास्नानादिमात्रकः

मन्त्रोच्चारणसामर्थ्यविरहश्चाखिलैरपि । कर्तव्यबुद्धिमात्रैकमानसरिसद्ध(द्धि)र्गतिस
सत्क्रियाकरणश्रद्धामात्रस्तत्करणालस । अरब्धसत्क्रियादुःखपरितप्तमना पुन ॥
दुष्टनिग्रहशिष्टैकपूजनज्ञानवानपि । तत्क्रियाकरणालस्यनामितापरहस्तदा ॥
सद्सज्जनसुज्ञानवानप्यत्यन्तदौष्ट्यत । कार्यानुगुणदौर्जन्यतत्परो नितरां सदा ॥
सत्पक्षपातरहित कदाचिद्दैवयोगत । सत्पक्षपाती भूयश्चाप्यथ स्थितचरित्रक ॥

भूयोऽप्यनेकदौर्जन्यसौजन्यद्वयशीलवान् ।
अप्यस्य गृहिणस्तत्तु भुपाया शाश्वता किल ॥
सन्त्यन्यस्य यतेश्चेत्तु कश्चित्तत्रापि नास्ति हि ।
पूर्वोक्तस्यास्य क्रमपि चैकं वक्ष्यामि सुन्दरम् ॥

## द्विमुखोदकपात्रप्रशंसा

उपाय तत्र शृणुत भवद्याक्षणेन वै । द्विमुखोदकपात्राम्भ स्थालीगोकर्णतो यदि ॥
सकृत्कृत्वाचमन पावयेदिति पापिनम् । एतज्जन्मकृताकृत्य शतसाहस्रकोटिहम् ॥
पूर्वैस्तत्कृतसत्कर्म मध्यवैकल्यवारहम् । कृतापेयमहत्त्वौषमहाविलयवानलम ॥
अनेकमक्ष्यहत्यौघ नियतायुर्धनन्दहन् । भ्रूणहत्यावीरहत्या सद्योहतातपायनम् ॥
गुरुपत्नीकृतमनस्सगसगतिवारकम् । सरिस्स्वामिकृतानेक महद्द्रोहातिभीतिहम् ॥
विश्वासपातकानेकसमुद्रान्तुं दतारकम् । विपाग्निदानशातक दूरीकरणसुक्षमम ॥
अपात्रीकरणानेकमहागभ्य(?)तरक्षकम । जातिभ्रंशस्य सुमहद्देनोवृन्दागसरपवि ॥
यावज्जीवमहासत्र गगास्नानफलप्रदम । सकलीकरणानेककुलकोटिहलाकृति ॥
मलिनीकरणारण्यैकमहाविन्ध्यैककुम्भज । प्रकीर्णकमहापापतमोवृन्ददिवाकर ॥
आजन्मपुष्करमहासलिलस्नानसमितम् । गगाब्धिसगकीलालसहस्रस्नानकारकम् ॥
चापाग्रकोटिसाहस्रावगाहनमहाफलम् । ज्योतिष्टोमातिरात्राप्तोर्यामयज्ञफलप्रदम् ॥
वाजपेयमहाराजसूयादिफलहेतुकम् । क्रतुराडश्वमेधाख्यशानसोमविभूषितम् ॥
सर्वकृच्छ्रफल सद्य सर्वत्रनफलप्रदम् । सर्वतीर्थक्षेत्रदेवस्थाने क्षणफलादिकम् ॥
एवमादिगुणैर्युक्त तदाचमनमुच्यते । अत्प्रवेशास्ययुग्मपात्रे तीर्थानि भून्ते ॥

षट्कोटिकोटिसंख्यानि पुष्करादीनि केवलम् । गंगाद्याः सरितः सप्त समुद्रा गिरयस्सुराः
ऋषयः पितरोयक्षाः वेदामन्त्राः सदाशिवाः । स्वयमेव वसन्त्येते पातुं तद्धारिणं नरम्

प्रजापतिः प्रजाः सर्वा पूर्वं सृष्ट्वा ततो विभुः ।
ततु मासामुपायज्ञो द्विमुखं पात्रमुत्तमम् ॥

कल्पयित्वा सर्वतीर्थनिलयं देवतालयम् । वेदावासं शास्त्रमूलं यज्ञकृच्छ्रतपःक्षयम् ॥
तत्कृत्वानेन ताः पापाः प्रजास्सर्वा निरीक्ष्य वै । अनेन यूयं तरत पात्रेणेति जगद्गुरुः
प्रोवाच किल तस्मात्तु तत्पात्रं तादृशं शिवम् । यत्र वा वर्तते तत्र नैव पापकथा खलु
तद्यमो भगवान् पश्चाच्चित्रगुप्तेन बोधितः । अत्यन्तसूक्ष्ममेतत्तु गुह्यमेव चकार हि ॥
तस्मात्तु सर्वे मनुजाः भूतलेऽस्मिंस्तदादि वै । न जानन्ति किलैतस्य महत्त्वमतिगोपितम्
कालेन मृत्युना भूयो यमदूतैः पदेपदे । अतिगुप्तं प्रतियुगं प्रतिसंवत्सरं पुनः ॥

तस्माद्द्विमुखसंपातस्थाल्यास्वीकृत्य तत्पुनः ।
गोकर्णेन क्रियां कुर्युः तेषां नास्त्येव पातकम् ॥

तादृशं दिव्यमुदकं खड्गपात्रेण ये पितॄन् । समुद्दिश्य क्रियां कुर्युस्तेषां लोका महोदयाः
पितरो नित्यतृप्ताः स्युः गयाश्राद्धेन चेद्यथा । शुद्धगोकर्णगजलं न प्राकृतसमं भवेत् ॥
नदीतटाकादिगतं यथा तेन समं भवेत् । न तूद्धृतसमं चेति प्रोचुः किल महर्षयः ॥

द्विमुखाम्भःपात्राभेदगतं कृत्वाऽथ गोमुखात् ।
स्वीकृत्य सर्वं यत्कृत्यं कुर्याद्यदि विधानतः ॥

सर्वं तरति दुष्कृत्यं यः कश्चिद्द्विजनामकः । ज्ञानाज्ञानैकनिरतः कर्मठाकर्मठः पुनः ॥

श्रद्धाश्रद्धाभक्तिभक्ति विद्याविद्यादिमध्यमः ।
अमन्त्रमन्त्र तत्त्वातत्त्वाभ्यामपि मध्यमः ॥
श्रुताश्रुताभ्यां नितरां संशयासंशयात्मवान् ।
निश्चयानिश्चयात्मा च कृतार्थः स्यादनेन वै ॥

ज्ञातासुखेन तरति स्वयमेव महामनाः । अज्ञातापरबुध्यैव केवलं शुद्धचेतसा ॥
एकमार्गस्तरत्येव मध्यमस्तु महाजडः । स्वस्यापि निश्चयो नास्ति सर्वकार्येषु संततम् ॥

परप्रोक्ता तु न श्रद्धा दुर्भिक्षेन जायते । तस्मात्तु तादृशाम्यास्य मध्यमस्याचलात्मन
नरण न कश्चिन्स्याताद्दृक् तरणचोदना । अत्यन्तदुर्लभैव स्यात्तादृशी सेयमीरिता ।
ताम्रेण द्विमुख पात्रे कृतेऽप्यन्न तु वैदिकम् । कर्मनाल सच एव पुष्कलत्वं प्रपद्यते ।

कर्म्येन चेत्र काम्यकर्म नान साद्गुण्यमश्नुते ।
नैमित्तिक तुवर्गेन सर्व हेम्नेति निश्चय ॥
नाहक पात्रस्य हनिन कृत्यानि निखिलान्यपि ।
वैदिकानि प्रनृत्यन्ति प्रमदेन युतानि वै ॥

मान्कराडोगोकर्णीन्यासर्वतोमुखतोऽप्य च । नित्यादिकर्मकरणे किं धाजानान्यह परम

द्विमुखान्निर्निसृतस्य सलिलस्यास्य केवलम् ।
एष साधारणो धर्मो सुरन्त्र प्रतिपादित ॥

सर्वकर्मैकवैकल्यप्रशमस्य यद्भवम् । शाद्दित्यं तेन वशिष्ठ्यकरणत्वं महर्षिभि ॥
बहुना किं प्रथैनस्तु सम्यङ्निश्चिनुताऽधुना । लोके सत्कर्मसारस्य द्विजमात्रकृतस्य वै ।

वैकल्यशून्यकरणात्साद्गुण्यकरणादपि ।
किमन्यत्यन्महच्छ्रेयो मर्त्यस्य भावुकम् ॥

मगल वा भगो वापि श्रीरात्स्मीरनदनरा । उपायो निरपायोऽयम यत्नसुलभ पुन ।
देहिमात्रस्यापि शिष्ट एवमन्त्रेपि तान्युन । समासेन प्रवक्ष्यामि तत्रादौ प्रथमा परा ।
श्वाहनिरसारकारिकम् गायत्री त्रिपदा शुभा । द्रुपदा सर्वमन्त्राणा शिरमङ्गल एव च

## पापहरमन्त्राः

मधुत्रय नाचिकेता पुरुषसूक्त तथोत्तरम् । पञ्चाक्षरोऽष्टाक्षरश्च द्वादशार्ण परात्पर ।
वामनारायणौ शार्ङ्गी पुण्डरीकाक्ष एव च । विष्णुकृष्णशिवा शंभुमहादेवमहेश्वरा ।
नामत्रय महामन्त्र वासुदेवोहरिस्तथा । हर भर्ग मृडेशान गङ्गाधरमहेश्वरा ॥
चन्द्रशेखर भूतेश गिरीशावृषवाहन । सर्वज्ञो धूर्जटिश्चैव भद्रोति भगवानपि ॥
द्वे मर्वे पृथक्त्वेन तारकाणि जगत्त्रयम् । अनिमाणि सर्वेषां यावज्जीव यतात्मनाम्

अत्यन्तसुलभान्येव यत्नसंकल्पशून्यतः। उपदेशादिराहित्यात् कालदेशाद्यभावतः ॥
अशुचित्वाद्यभावाच्च सर्वसाधारणादपि। नामान्यन्यानि दिव्यानि पवित्राणि जगत्पतेः

असंख्यकानि पुण्यानि नित्यं शक्तानि पालने।
अत्यन्तपापिनो घोरान् पातुं शक्तानि देहिनः ॥
स्मृतिमात्रादुक्तिमात्रा(द्)गानतः श्रवणादपि।
एतेभ्योऽन्ये पुनस्सन्ति ये किंचिद्यत्नतोऽधिकाः ॥

नमकं चमकं पुण्यं पापमन्यः परात्पराः। कूश्माण्ड्यो वामदेव्यं च शाक्वरं च रथंतरम् ॥
बृहत्पवित्रं सुमहत् गायत्रं पावनं महत्। तिर(:)पवित्रं सर्वेड्यं क्ष्मापवित्रं गणास्तथा
एतेभ्योऽप्यधिकं शाखामात्राध्ययनमेव हि। तेन चेदतिशीघ्रेण नरस्तरति केवलम् ॥
वेदवत्तरणोपायो नान्योऽस्ति जगतीतले। विजानतो ब्राह्मणस्य तस्मान्नित्यं द्विजोत्तमैः
अध्येतव्यः प्रयत्नेन वेदो नारायणात्मकः। वेदाध्ययनराहित्ये शाखामात्रोऽपि वा द्विजः
शनैः शनैश्च च्यवते ब्राह्मण्यान्नात्र संशयः। च्यवनं दोषयुक्तत्वं विच्छेदाद्वेदिवेदयोः
पुरुषत्रयमात्रस्य कथितं ब्रह्मवादिभिः। हरिनामानि यावन्ति कथितानि महात्मभिः ॥
वेदशास्त्रपुराणादिप्रसिद्धान्यपि कृत्स्नशः। तावन्ति चैकवेदार्णं तुलितान्यखिलान्यपि

## वेदप्रशंसा

अतो हि ब्राह्मणानां सः स्वाध्यायो धनमुच्यते। प्रसिद्ध धनतस्त्वेतत् कथितं सुमहद्धनम्
धनं तु विनियोगेन निधनं प्रतिपद्यते। वेदाख्यं परमं श्रीमद्धनं लोकोत्तरं यतः ॥
विनियोगेन नितरां अतिवृद्धिं प्रपद्यते। प्रतिक्षणं प्रतिदिनं प्रतिमासं तथैव च।
सम्यक्प्रत्ययनं प्रतिवत्सरं दृश्यतेऽपि च। द्विजमात्रस्याधिकारो वेदेनान्यस्य कस्यचित्

तत्रापि संस्कृतस्यैव सम्यक् तज्जातकादिभिः।
शुचिस्नातस्य नितरां कृतसन्ध्यादिकस्य वै ॥

## वेदाध्ययननिमित्तानि

विशेषदिवसेष्वेव न तु साधारणादिषु। तेषु चापि न साध्यादिसमयेषु कदाचन ॥

राष्ट्रक्षोभे जनक्षोभे शत्रुराजादिपीडने । शरारातापसंघाते बन्धूनां मरणे तथा ॥
विपत्तौ श्रोत्रियमृतौ संकटे समुपस्थिते । आगमे श्रोत्रियाणां च विदुषां श्रेमतामपि ॥
यतीनां योगिनां चापि गुरूणां च समागमे । द्वयोर्विषुवयोरेवं ग्रहणे चन्द्रसूर्ययोः ॥
समग्रमारिदिन तस्मिन्नध्ययनद्वये । उपाकर्मणि चोत्सर्गे काण्डानामुत्सवादिषु ॥
दिव्येषु मानुषेषु निरयेषं मेघगर्जने । तथा वर्षति पर्जन्ये महागुरुनिपातने ॥
पुनरन्येषु कालेषु देशभेदेषु सर्वथा । श्मशानशूद्रचण्डालग्रामचण्डालवाटिषु ॥
ताद्दशस्यास्य वेदस्य साक्षान्नारायणात्मनः । तत्स्वरूपैकदीपस्य विप्ररोगधिरूपिणः ॥

## वेदाध्ययनक्रमम्

ग्रहणं धारणं चापि यत्नेन महता स्मृते । स्वाधीने ताद्दशे वेदे सर्वप्राणिकयत्नतः ॥
सलभ्य तेन लघुना श्रवणादिसुखेन वै । क्रियानान्तरितेनैव ब्रह्मज्ञानं प्रपद्यते ॥
अत्यल्पेनैव कालेन तेन सायुज्यमुच्यते । मार्गोऽयमेव मुक्त्येस्तु नान्यत्कश्चन दृश्यते ।
यद्यन्यो यदि मार्गोऽस्तीत्येवमस्या इति स्म य ।
स वेद न तु वेदस्य तत्वं धर्मस्य वै ध्रुवम् ॥
स मूढ एव नितरां अस्मिन्नर्थे न संशयः । पुराणेष्वागमेष्वत्र कर्मणापि क्वचित्क्वचित्
कैवल्यसिद्धिः स्याद्वेदैरस्य वाक्यस्य केवलम् । तात्पर्यं कर्मणस्तस्य ह्यत्यन्तातिशयार्पणे
तत्वेय परमार्थस्य केवलं प्रतिपादने । पुनः पुनः प्रवक्ष्यामि निष्कर्षं श्रु नितारयो ॥

## मुक्तौ वेदेतरश्रवणसाधनतानिषेधः

कैवल्यं ब्राह्मणस्यैव ज्ञानेनैव न चान्यतः । ज्ञानं च श्रवणादिभ्यः श्रवणं चापि केवलम्
वेदान्तानामेव वाक्यानां नियमेन गुरोर्मुखात् । कर्तव्यत्वेन विहितं न स्वमत्या कदाचन
अर्थज्ञानान्न साध्यं च भक्त्या गुरुमुखं विना । एतेनैव पुराणादिवाक्यानां श्रवणात्तथा
भाषाविशेषरचितशास्त्रार्थानां च सर्वथा । ज्ञानं नोदेति तस्मात्तु ब्रह्मज्ञानस्य सिद्धये
न पुराणादि वाक्यानि भाषया रचितानि वा ।
शास्त्राणि नानवेक्ष्याणि यदि दृष्टानि मोहत ॥

ज्ञानकारकाण्येव तस्मात्तानि परित्यजेत्। ब्रह्मज्ञानाय यतते यो वा लोके विचक्षणः
अनृतात्सत्यवाक्येन मानुषाद्दैववाक्यतः। दै(दि)वीं वाचमितिश्रुत्या तदर्थपरिशुद्धये ॥
क्रमेणानृतसंत्यागं कृत्वा सत्यं समाश्रयेत्।
तथैव मानुषीं भाषां त्यक्त्वा दिव्यां समाश्रयेत्॥

## प्राकृतभाषोच्चारणनिषेधः

दिव्यां भाषां परित्यज्य प्राकृतां प्रवदेद्यदि। निपतेत्प्राकृतोमूढः महापङ्के यथा जडः
नितरां दिव्यभाषां हि प्राकृतोऽपि शनैःशनैः। यत्नं कृत्वा महान्तं तं तामभ्यस्य दिने दिने
कृतकृत्यो भवेन्नो चेत्तया प्राकृतभाषया। पदे पदे प्राकृतः स्यात्तदा जन्मनि जन्मनि ॥
एवं सत्यपि यो मोहाद्वा द्विद्वान् भवन्नपि। भाषा(सु)प्राकृतास्वेव निष्ठश्चेत्प्राकृतो भवेत्

## संस्कृतभाषाविधिः

मौनकालेषु नितरां कर्मकालेषु दैविके। पैतृके वा पावकेषु दिव्यां भाषां वदेद्दतः ॥
दिव्यभाषापरिज्ञानविकलो यः स तु स्वयम्।
स्वीयामेव वदेद्भाषां न त्वन्यां मनसा पि च ॥
कर्मकालेषु पुण्येषु मौनकालेषु वा तथा। दिव्यया भाषया नूनं संभाषेतैव धर्मतः।

## मौनविधिः

स्त्रीसंगानन्तरं तस्मिंस्तत्प्रक्षालनपूर्वके। काले मूत्रपुरीषोत्सर्गयोराचामपूर्वके ॥
पुनरेतादृशेऽन्येषु कुर्यादभिनयेन वै। संज्ञया चेष्टया वापि स्वाभिप्रायं परस्य तु ॥
काष्ठमौनेषु दीक्षासु वीक्षणेनैव नान्यथा। न कार्यमेव तच्चापि तत्र सन्ध्यासु केवलम् ॥
देवभाषादिका लोके वेदशास्त्रमयी च सा। तस्यामेव रतो नित्यं देवसायुज्यमाप्नुयात्
ज्ञानं दिव्यां शिवां भाषां भाषाविरचितेषु वै।
शास्त्रेषु कुरुते श्रद्धां स द्विपाद्गर्दभः स्मृतः ॥
भाषया रचितं शास्त्रं स्त्रीशूद्राणामचेतसाम्। मन्त्रमात्रानधिकृतां कर्मस्वनधिकारिणाम्

यत्किंचिदर्थबोधाय कदाचित्परिकल्प्यते ।
स्त्रीशूद्रेनाद्र विदुषां आहिताग्नेश्च यज्वनाम् ॥
कुलीनानां वदिना च न परस्य स्यु कदाचन ।
तेषां सदा कर्ममध्ये तत्तन्मन्त्रार्थपूर्वकम् ॥
बोधनस्य विधानेन याचनेनास्य शासन ।

आहिताग्निपत्नीनां प्राकृतभाषानिषेध

न युक्ता लौकिकी भाषा स्त्रियाया यदि केवलम् ।
यत्नात्साम्यं यनैकस्ये कराभिनय ईरित ॥
न तु प्राकृत भाषा सा विहिता वा कदाचन । शूद्रशद्वेनात्र पर ये सन्तो द्विजसत्क्रिया
तेषामपि विशेषेण महनीयमपूर्वकम् । नित्यगुरुविधानेन तत्काळस्नानबोधनात् ॥
सिद्धादिमन्त्रविधिना प्रयुक्तिप्रतिपादने ।
तन्मात्राक्षायीत्यस्य पर परिज्ञानस्य तस्य वै । अत्यन्तावरयत्नेन न गृह्यन्तेऽत्र तादृशा
तद्भिन्ना अत्र समाह्नाह्नाह्रदानां विशेषत ।
भाषाकृत तदाभासशास्त्रा तच्छिद्रलिपिभि कृतम् ॥
विनियुक्त नृत्यगीतपटुपाटुसम यथा । तच्च स्वराज्यमशास्तकर्मणि परस्य या ॥
स्वस्य वा गच्छित यत्तु मुक्तये नाशमेति तत् ।
एव सत्यस्य तु स्वछाया प्राकृतायालयाविधे ॥
भावाया सुमहज्ज्ञान बोधकत्व कथ भवत् । एवमेव प्रकथित पुराणागमयोरपि ॥
सद्ब्रह्मज्ञानहेतुत्व कुत एतसि चेत्पुन । एवमत्र प्रवक्ष्यामि त एते पौरुषा यत ॥
सत्रपौरुषमात्रस्य देवस्य सत्तिबोधनात् । तन्मात्रस्यैव नितरां सिद्धिरित्येव सूरिभि ॥
रचितो निश्चय सर्वेनद्द्वारा तदनन्तरम् । कृते तद्वमनन तत्प्रसादेन तत्परम् ॥
चित्तशुद्धिदिचरात्सद्धि यथा वर्णितकर्मभि । अत्यन्तसत्वराज्य चित्तशुद्धिर्भवेत्तदा
तप कृच्छ्रादिभिन्यून(भग)देय यच्चि य । सत्राण्यपि च कर्माणि तप कृच्छ्रादिकान्यपि
कैवल्यहेतुकान्येव तदर्पणधिया यदि । कृतानि कामना त्यक्त्वा तानीमानि कर्माणि य

कालेन महताऽत्यन्तप्रयासेन परं त्वियान् । सुमहान् भव इत्युक्तः प्रयासेन विनैव हि ॥
वेदोक्तनित्यकृत्यैस्तु परा सिद्धिरितीयती । इदा सा सूक्ष्मतो ग्राह्या एवं सत्यत्र यो नरः
सायुज्यनामकां(मिकां)मुक्तिं कर्मणा येन केनचित् । स्त्रीशूद्राणां प्रवदति मूढो नात्र संशयः

## शूद्रादीनां वेदानधिकारत्वनिरूपणम्

अपौरुषेयवेदस्य साक्षान्नारायणात्मनः । पौरुषाणां पुराणानां उभयोर्मुक्तिसाधने ॥
समाने सति सामर्थ्ये को भेदः स्यात्परोऽत्र वै ।
यथा पौरुषशास्त्रेषु शूद्रा (योग्या) गुरोर्मुखात् ॥
श्रवणे योग्यता तद्वद् वेदश्रवणयोग्यता । मुखेनैव भवेन्नूनं एवं सत्यत्र केवलम् ॥
वेदाक्षरश्रवणतः कपिलाक्षीरपानतः । ब्राह्मणीगमनाच्चापि सद्यः शूद्रः पतेदधः ॥
एतादृशमिदं शास्त्रं कल्यन्ते सर्वसंकरे । दृढं सर्वत्र सुदृढा नाशमप्राप्य सुन्दरम् ॥

## वेदप्रशंसा

सर्वग्राह्यं सर्वसमं प्रसिद्धं राजते किल । यो वा वेदाधिकारी स्यात्स मुक्तेरधिकार्यपि
यो वेदानधिकारी स्यान्नयं मुक्तेस्तु भाजनम् । वेदाक्षरश्रवणतो निष्कृतिर्यस्य घोरतः
तस्य मुक्तौ तथात्वं स्यादेवं व्याप्तिस्सुनिश्चिता ॥

## वेदातिरिक्तमुक्तिसाधननिन्दा

वेदोक्तमार्गभिन्नेन पथा यो मुक्तिमुत्तमाम् । कर्मादिनापि वदति सुमहापापकर्मणा
संप्राप्य चित्ते मालिन्यं वदत्येवेति तत्त्वहृत् । वेदेन तुल्यं वदति पौरुषं ग्रन्थजालकम् ॥
उत्पत्तौ तस्य सांकर्यमनुमेयं विपश्चिता । ब्रह्मविद्यासमं विद्याभासं शास्त्रादिजालकम्
यस्सदस्सु व्यवहरेत्स नूनं ब्रह्मघातकः । अवेदं यो वेदमिति प्रलपेदल्पबुद्धिकः ॥
स शूद्रत्वमवाप्नोति सद्य एव न संशयः । ब्राह्मणेन समं शूद्रं प्रवदेन्नित्यचर्यया ॥
तथा शूद्रं विप्रसमं वदेत्सच्चर्ययापि वा । तावुभौ धार्मिको राजा छित्वा जिह्वां प्रमापयेत्
यतस्तावन्यबीजैकजनितौ पापविग्रहौ । यो वेद कर्मभिस्साम्यं ज्योतिष्टोमादिभिः परः
समत्वेन व्यवहरेद्गार्ह्याग्निजमखादिकान् । स पूर्वजन्मवृषलो निश्चेतव्यो मनीषिभिः ॥

ये वेदं कर्मणा मध्ये पौरुषग्रन्थमध्यगान् ।
अवशाद्वाक्यखण्डास्तान् प्रवदेत्कर्म तद्ध्रुवम् ॥
वैकल्यं प्रतिपद्येत विषयुक्तमिवामृतम् । ते वेदा ब्राह्मणा गाव मन्त्रादर्भास्तिलास्तथ
तीर्थानि सरितोऽम्भांसि स्वत शुद्धानि सर्वदा ।
स्वत सर्वोपकाराय स्वतन्त्रा सर्वदा सताम् ॥
हिताय हि प्रवर्तन्ते ब्राह्मण सततं सदा । यथा वेदस्तथा यस्य वेदो यस्य धर्न स्मृत ।
स एव मुक्तये नित्यं यतते सास्य सिध्यति ।
शूद्राद्यस्तु तद्भिन्ना मुक्तिकामा अपि स्वयम् ॥
पर्यया प्राप्य विप्रत्व तेषां शुश्रूषयैर हि । यत्नाज्जन्मान्तरे तस्य संप्राप्य तदनन्तरम् ॥
वेदानधीत्य कर्माणि तदुक्तानि विधानत ।
कृत्वा सम्यक् तन्महिम्ना चित्तशुद्धेरनुत्तरम् ॥
श्रवणादिमुखेनैव प्राप्नुवन्ति कृतार्थताम् ।
साक्षाच्छूद्रो मुक्त इति ब्राह्मणो वान्य एव वा ॥
वेदोक्तमार्गभिन्नेन यथा वै येन केनचित् । मुक्तोऽभूद् भवतीत्येतद्वाक्यं हि मृगतृष्णिका
वेदागतत्वेन काश्चाचिद्विधाना प्रतिपादनम् । तासामत्यन्तमाहात्म्यप्रतिपादनमात्रके ॥
तात्पर्यमितिविज्ञेय न तु प्रामाणिक हि तत् । अर्थवादैकमात्रस्य स्वतात्पर्ये सदादराम्
हृदयाभावत किंतु ह्यत्यन्तातिशयार्पणे । तस्य तात्पर्यमेवेति शास्त्राणां तत्त्वमीरितम् ॥
तथाहि तत्र सम्यग्वो विशदाय निरूप्यते ॥

## वेदाङ्गविस्तारः

पतञ्जलिकृत तत्तुशास्त्र व्याकरणं महत् । आपस्तम्बादिभि कल्पा सूत्रकारैर्विनिर्मिता
इडविद्यादिभिर्नैस्तच्छन्दश्शास्त्र च कल्पितम् ।
ज्योतिश्शास्त्र तु सुमहान् महामुनिसुरोत्तमै ॥
दिवाकरमधुच्छन्दमुख्यैरन्यैश्च कारितम् । निरुक्तमीश्वरेणैव भृगवर्णानां विशेषत ॥

विशदायाखिलानां च कारितं कृपया तदा। भरद्वाजादिभिः शिक्षावेदार्थविशदाय व ॥
तदा तत्पाठसामीचिन्यस्य पूव कृतं हि सा।
तथा वेदेषु केषांचित्पदानां ग्मादिरूपिणाम् ॥
तथा जातीयकानां च कल्कशल्कादिपाथसाम्। हरो भर्गपरस्सर्वशास्त्रसंगो नृचक्षसाम्
ओजस्तेजो यशोवर्णबलादीनां च केवलम्। श्रुत्यन्तर्लीनगूढार्थनिर्णयाय दयानिधिः ॥
स्कन्दश्चकार भगवान् पुरा कल्पान्तरं पुनः। एतेषां किल वेदाङ्गत्वेन सर्वं निरूपणम् ॥

## वेदाङ्गप्रशंसा

अङ्गाङ्गिनोरभेदत्वादेतान्यपि महान्त्यलम्। साक्षाद्वेद इति प्रोचुर्जगत्यस्मिन् हि केचन
महोपकारकत्वेन चैतेषां ग्रन्थमात्रके। वेदांगत्वेन नितरां संस्तुतिर्हि स्मृताखिलैः ॥
वेदवाक्येषु वेदानां तत्र तत्र क्वचित्क्वचित्। संजाताजभिश्चेति श्रूयते किल यद्यपि ॥
अथापि तस्य वेदस्य नित्यस्य ब्रह्मरूपिणः। नितरामतिगूढस्य ज्ञेयस्य तु तदा तदा ॥
कल्पादिषु तदाऽविर्भावो हि तत्तन्मुखेन तु। नैतेन जननं तेषां कर्तृत्वमपि तस्य न ॥
तादृशस्यास्य नित्यस्य सर्वशास्त्राण्यपि स्वयम्।
पुराणस्मृतिकल्पादिग्रन्थजालानि केवलम् ॥
तदर्थनिर्णयायैव प्रवृत्तानीति सूरिभिः। कथितानि महाभागैः नान्यथैषां स्थितिः परा
तस्मादिदानीं यः कश्चित् वेद तत्कर्म तत्पर.। तदर्थज्ञानसंपन्नः शुद्धश्चाश्चल्यवर्जितः
कृतार्थतामियादस्मिन्नथ वच्मि न संशयः ॥

## वेदाध्ययनवर्जितस्य पुनर्वेदाधिकारः

पुनरन्यत्प्रवक्ष्यामि वेदाध्ययनवर्जितः। पित्राद्यशिक्षितोज्ञानाज्जातकर्मादिसंस्कृतः ॥
सन्ध्यामात्रप्रधानश्च पुनःकालेन केनचित्। संगत्या महतां पुंसां श्रीमतां दर्शनादपि ॥
श्रवणाद्दैवयोगेन तत्रतत्रावशात्पुनः। वेदतत्कर्मतत्कर्मितदर्थसुमहामनाः ॥
सुशिक्षितस्वकर्मैकमन्त्रमात्रक्रियापरः। पूर्वस्याकृतवेदाध्ययनतप्तमहामनाः ॥
वेदकर्मस्वतिमनाः पराधेनश्च सन्ततम्। स्वशक्त्युत्साहानुकूलकर्मकृद्ब्रह्मचिन्तनात् ॥

ब्रह्मभक्त ब्राह्मणैकी ?)सपर्यामतिमानति। पुनर्जन्मान्तर शुद्ध श्रीमतो महतरसत ॥
योगिनो यज्वनो गेहे प्राप्यात्पेनैव केवलम्। कालेन भूत्वा सुमना सर्ववेदान्ततत्त्ववित्
प्राप्नुयाद्ब्रह्मनिर्वाण वेदमार्गानुसार्ययम ॥

## वेदेतरमुक्तिसाधननिषेधः

वेदोक्तमुक्तिमार्गोपायादन्य कोऽपि सुन्दर। अत्यन्तसुलभ सूक्ष्मतुशास्त्रान्तरचोदित
उपायोऽस्तीति मुक्तनीचहूणादिकत्थनम्। तथा यद्यस्ति त सर्वसन्ध्याकर्मादिक भूशम
वेदोक्त निखिल त्यक्त्वा कर्मजाल सुखेन वै। आश्रयेदेव किं भूय एतै सन्ध्यादिकैर्वृथा
यो वक्ति मुक्तिसरणी वेदोक्तान्यां जडाकृति ।
द्विजवशप्रसूतस्सन् सपुरामाश्रयम् सदा ॥
तत्रैव हि स्थितश्चेत्तु विना सन्ध्यादिकर्मणा। विचक्षणो द्विजेषु स्याद्यदि कुर्वन् पुनर्महत्
सन्ध्यादिक वेदलब्ध विन्देच्छ्रेयस तु केवलम्।
उभयभ्रष्ट एव स्यान्न किं जानाति मूढधी ॥
सन्ध्यादिकमभिर्मुक्ति चत्वारिंश करैरपि। इत्येव वेदसिद्धान्तो यदि तान्त्रिकदीक्षया
लिंगादिधारणनापि पुनर्निर्वाणदीक्षया। एतज्जन्मनि मुक्ति स्यात् निभिरेभि सुकर्मभि
तन्निष्ठस्तत्परो भूत्वा जातकर्मादिक विना। स्थितश्चेत्तेन मार्गेण स उपाया परा इति ॥
निश्चित्य तु शक्यते सर्वं तस्मात्तादृशकत्थनम्।
न कार्य(??)कार्यनैतस्य सिद्धान्तश्चे(श्चि)त्कृत्यते ॥
इतरापेक्षयाऽहि यत्तदुक्तैरेव कर्मभि । कैवल्यसिद्धिः झटिति एतस्मात्पुनरत्यति ॥
उपाय कोऽपि चेद्भूय स हि सर्वोत्तमोत्तम ।
अत्यन्ताश्रयणीय स्यात्किमेतैरिति वै पुन ॥
एतदाश्रयणेनैव [redacted] हि दुर्बल उच्यते। तदाश्रय विनैतेषां नित्यसश्रयणात्परम् ॥
आधिक्य सुमहत्प्राप्तमेतस्योपरि केवलम्। मीमांसाप्रचयो नून निष्प्रयोजनको ध्रुवम
तस्यां निर्वाणदीक्षाया सर्वेषां कर्मणा परम।
नित्यनैमित्तिकानां च बह्वी त्यागो विधीयते ॥

मन्ध्यामग्नौ त्यजामीति स्वाहाशब्देन मन्त्रतः। सर्वेषां पुनरन्येषां मलत्वेन च पाशतः

भावयित्वाखिलान्येव संस्कार्याण्यखिलान्यपि।
चत्वारिंशत्कसंख्यानि शिखां वर्षाणि सूत्रतः॥
यज्ञोपवीतं अन्यांश्च च(चतुर्वर्णान्)श्च तथाश्रमान्।
अग्नौ दग्ध्वा होमपूर्वं शौत्रसंध्यादिकाः पराः॥
तच्छास्त्रमार्गात्स्वीकृत्य मनुमेकं च तारकम्।
पञ्चाक्षराख्यं लब्ध्वाऽथ तद्गुरोर्मुखतस्ततः॥

नर्वगत्वसिध्यर्थं व्यवहाराय देहिनाम्। स्नानसंध्याक्रियादीनि वर्णाश्रममुखान्यपि॥
ण्डेन संगृ(प्र)हीष्यामीत्येतद्व्यामोहकं परम्। ईशेन रचितं शास्त्रं अष्टाविंशतिसंख्यया
थैव वैष्णवं चापि व्यामोहाय पुरा कृतम्। सुगतानां राक्षसानां देवदेवेन विष्णुना॥
देतदखिलं तस्माच्छास्त्रं तद्द्विविधं परम्। व्यामोहकं परित्यज्य तारकं परिगृह्य वै॥
दुक्तमार्गतो नित्यं सर्वकर्माणि यानि वा। प्रोक्तानि तेषु कुर्वीत कृतकृत्यो भवेद्यतः॥

तानि चैतानि कर्माणि प्रोच्यन्ते क्रमतोऽधुना॥

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च। नामान्नप्राशनं चौलं मौञ्जीव्रतचतुष्टयम्॥
गोदानिकं तथा स्नानं विवाहः पैतृमेधिकः। एकविंशतियज्ञास्तु नित्या ये वेदचोदिताः

## नित्यकर्माणि

पूर्वमेव समासेन मया सम्यङ्निरूपिताः। दैनंदिनानि कर्माणि सर्वेषामपि देहिनाम्॥

स्नानं सन्ध्या जपो होमः स्वाध्यायो देवतार्चनम्।
आतिथ्यं वैश्वदेवं च कर्माण्येतानि मन्त्रतः॥
कर्तव्यत्वेन नितरां चोदितानि मनीषिभिः।

## कर्मारम्भे कर्तव्यानि

सर्वेषां कर्मणामादौ धर्माधर्मविचिन्तनम्। कृत्याकृत्यमवाच्यं यद्वाच्यं शक्त्यनुरूपकम्॥

निश्चित्य मनसा पश्चाद्देवानिष्टांश्च भावयेत्।
कुलदेवान् ग्रामदेवान् देशदेवान् समीपगान्॥

सस्मरेद्भक्तियुक्तस्सन् मनश्चाञ्चल्यवर्जित ।
दिक्पालान लोकपालाश्चैन् ब्रह्मविष्णुमहेश्वरान् ॥
सप्रणम्यानुचिन्तयसन् गा कन्या च सुवासिनीम । गजमश्व वृष वेश्यां दर्पण मर्कट तथ
अतिनील विचित्रा पश्येदपि च वाडव(व)म । कालीनमुनन शान्त सुमुख कोपवर्जितम
सदा हास्यमुख(लो)क पुन्निग जीवपुन्निगम । दर्पण च क्रमेणैव(त)पश्येन्नित्यमतन्द्रित ॥
भानुवारे विशेषेण पूर्व सदुदयस्य चेन् ॥

## सुवर्णदर्शनम्

सुवर्णदर्शन कुर्यात् सुवर्णस्य न चे पुन । सुवर्णदर्शन नित्य सूर्यानन्तर स्मृतम ॥
शिशुवारे यत्नमयातपूर्व सायाह्नमध्यमे । कृत्वावलोकन पूर्वदिवसे भास्करस्य च ॥
वारे तदुदयात्पूर्व दर्शन तस्य नद्भवन् । अपूर्वमगलप्राप्ति ताटाबन्धुनिरीक्षणम् ॥
अमगलानामप्राप्ति भंवेच सुखमुत्तमम ॥

## मर्कटदर्शनम्

अत्यन्तरानसन्मानमारोग्यमतिशोभनम । अत्यन्तधनलाभश्च लाभो नष्टधनस्य च ॥
भवेदेव न सदेह नि य मर्कटदर्शनात् । आयुष्य वभिवृद्धि स्यादारोग्य कायदार्ढ्य ता ॥
प्रसन्नता च मनस धैर्य स्थैर्य शमो दम । सौमुख्य सर्वकार्येषु तस्मात्मर्कटमुत्तमम ॥
गृहीत्वा भाग्यवन्तो ये पोषयन्तस्य त सदा । तद्दर्शन प्रकुर्वन्त प्रात कालेषु मौनव ॥
पर्यन्ते सर्वभागैश्च नित्यश्रीशा महोन्नता । नागान्तकग्रहणत महापीडा प्रजायते ॥
तस्य प्रद्वानयनत ग्रहपीडा भवेद्ध्रुवम् । तस्मात्तद्दर्शनात्तस्य दर्शन चक्षुभावहम् ॥

## गरुत्मद्दर्शनम्

न चक्तु मार्गेण कृत्वा कुर्यात्तस्यावलोकनम् । कुत्राय यत्र कुत्रापि स्थित दूरसमीपयो ॥
प्रज्ञातमतियत्नेन कृत्वा पूर्वोक्तकालके । तदर्थमेन त पश्येन्न कीलालतटे पुन ॥
तटे जलस्य यदि त अवशादागत नर । पश्येत्तस्मिन् दिने सार्य भुक्तिर्भवति केवलम्

तद्दर्शने या नियमं कृत्वा तस्यावलोकने । अत्यन्तमटनं कुर्वन् तमदृष्ट्वैव केवलम् ॥
नेनदं वा क्रोशनस्य शृण्वन् तस्यावलोकने । यच्छ्रेयस्तदवाप्नोति विप्रं पश्येदथापि वा
ारुत्मतो भानुवारे दर्शनाच्च स्वरो वरः । सचेष्टयोर्द्वयोस्तद्वदत्यन्ताक्रोशतोः मिथः ॥
ारिक्रमणतो भूयः प्रादक्षिण्यविधानतः । दर्शनं वासुदेवस्य साक्षाल्लक्ष्मीपतेरपि ॥
अत्यन्तदुर्लभं प्रोक्तं ततः शतगुणं शिवम् ॥

## चापादिदर्शनम्

चापस्य दर्शनं श्रीमत्सर्वसंपत्प्रदायकम् । यदा कदा यत्र कुत्र गमनं वामतो यदि ॥
चापस्य तस्य वान्यस्य भरद्वाजाख्यपक्षिणः ।
जीवं जीवस्य क्रौञ्चस्य कण्वराधकलापिनाम् ॥
सर्वसिद्धिकरं प्राहुः भाविकार्यं च हस्तगम् । जातमेवेति विज्ञेयं तत्कालेन तु केवलम् ॥
निन्द्यो निनादो विज्ञेयः प्रयाणेष्वखिलेष्वपि ।
पक्षि(क्षी)णां गमने काले निनादो निन्द्य उच्यते ॥
विवाहमैत्रकृत्यादिगमनेषु(पक्षि)भिः कृतः । तत्कार्यमध्यपरसकलिक्रन्नाद ईरितः ॥
उपविश्यैव तिष्ठन्तं तूष्णीकं पादपादिषु । पक्षिणं क्रिययास्वस्य मार्गमध्येषु बुद्धिमान् ॥
तत्कार्यस्यानुकूला(ल्या)य लोष्टपाषाणदण्डकैः ॥

## स्वकार्यानुकूलपक्षिगमनसंपादनम्

(भी)षयन् वा गतिं तस्य साधयेदनुकूलतः ।
बलाच्छत्रुं च शकुनं स्वव्यापारेण सन्ततम् ॥
स्वानुकूलं साधयीत तेन श्रेयो महद्भवेत् । द्विजद्वयस्याभिमुखं एकशूद्रस्य वा तथा ॥
प्रयाणेषु प्रशस्तं स्यात्तच्छ्रीदस्यापि दुर्लभम् । दर्शनं पूर्णकुम्भस्य बहूनां वा द्वयोस्तु वा
आभिमुख्यपुरंध्रैकसमानीतस्य दुर्लभम् । साक्षाच्चतुर्मुखस्यापि देवदेवस्य वा तथा ॥
भेरीतालमृदंगौघवारस्त्रीणां विशेषतः । आभिमुख्याभिगमनं दर्शनं च प्रशस्यते ॥

सर्वप्रयाणकालेषु कुणपस्य च दर्शनम् । आभिमुख्याभिगमनं चतुर्भिर्वाहकैस्सह ॥
साक्षात्पुरन्दरस्यापि दुर्लभस्तत्प्रकोर्वितम् । अत्यन्तस्वगृहस्याराद्वामाद्दक्षिणतो यदि ॥
बलिभुग्गमनं शस्तं सर्वकार्यैकसाधकम् । नारायणमहापक्षिगमनं च तथा पुनः ।
सर्वप्रयाणकालेषु जातं तत्कार्यमित्यपि । विज्ञेयमेव सुव्यक्तं चाञ्चल्यं तत्र वर्जयेत् ॥
कार्यार्थं भाषमाणस्तु तदा यद्यन्यशात्पुनः । अश्वप्लुतं भवेद्रम्यं तत्कार्ये वृद्धिरुच्यते ॥

सद्य सिद्धिश्च कथिता सुराणामपि तादृशम् ।
निमित्तं दुर्लभं शस्तं नराणां किं पुनः स्मृतम् ॥

तत्तत्कार्यैकवाक्येषु चलस्यैकत्र चत्सदा । लौकिकं वा वैदिकं वा वाक्यं तद्धृदयंगमम् ॥
सदानुकूल्यैकरूपसाधकं तच्छ्रुतं यदि । तत्कार्यं च ततः पश्चात्कालेनाल्पेन सिध्यति ॥
सद्यिग्धशुभकार्याणां चिन्तनेऽप्यतिसंशयात् । कर्तव्यत्वाकर्तव्यत्वद्वयेनैवातिसंकटात् ॥
कुरु मा त्वं न संदेह एवं वाक्यं उदीरिते । तदा तु संशयं त्यक्त्वा तत्कार्यमतिशीघ्रतः ॥
कुर्याद्विचारेण तत्कार्यं तत्परं ध्रुवम् । वृद्धिं प्राप्नोति महतीं यस्मिन्नर्थे न संशयः ॥
सर्वत्र शुभकार्येषु समुद्युक्तेषु सन्ततम् । कर्तुं तदा यदाज्ञातं निमित्तं शुभसूचकम् ॥
शुभकार्यकरं स्याद्धि रोगोपद्रवचिन्तने । राजचोरारिचिन्तासु तदा सद्य समुत्थितम् ॥
घण्टाशब्दः शंखशब्दः मधुरोणाश्रुस्वरः । तूर्यशब्दो गीतशब्दो तालस्वनिकवैणवाः
भेरीमृदङ्गपणवढक्काडिण्डिमसम्भवः । सर्वे शब्दाः किं बहुना शुभत्वेन निरूपिताः ॥
ते सर्व एव पृथक्त्वेन सद्यः प्राणहराः स्मृताः । रोगादिचिन्तने तर्हि चौषधादिपरिमर्दे
क्षुत्समास्यध्वनिमार्गेषु ध्वनिर्दुर्लक्षणादिकं । तच्छामकं प्रकथितं सद्य एव न चापरः ॥

एवमेवाशुभानां च कार्याणां सततं स्मृतम् ॥

## दुष्टनिमित्तानि

प्रयाणादिषु सर्वेषु दुर्निमित्तानि केवलम् । प्रशस्यन्ते विशेषेण न स्युस्तत्र शुभानि वै ॥
यानि दुष्टनिमित्तानि रोगपीडादिकर्मसु । तानि सन्ति प्रशस्तानि सर्वदा नात्र संशयः ॥
काकश्वादिमार्जार (र)प्रयाणपुरतो भवेत् । स समीचीन इत्युक्त विपरीतोऽन्यथा स्मृत

दर्शनं सर्वकार्येषु मार्जारस्यातिगर्हितम् । अथाऽपि केचिन्मार्गस्य मध्ये गच्छन् प्रदृश्यते
यद्ययं काकवद्भूयः समीचीनस्मृतस्त्विति । प्रोचुर्महर्षयो देवास्तादृक् तद्गमनं पुनः ॥
दुर्लभं वासवस्यापि तस्य साक्षाच्छचीपतेः । तिलधातुरुवाग्वाशि शशिकापायिणामपि
यतीनां दर्शनं दुष्टं प्रयाणेषु निरन्तरम् । विधवानां देवतानां तत्पत्नीनां तथैव च ॥
उल्कावह्निकराणां च दर्शनं गमनेतराम् । निन्दितं सर्वशास्त्रेषु तस्मात्तत्परिवर्जयेत् ॥
सुमंगलीहस्तगतः सज्वालो वह्निरागतः । यदि दृष्टो मार्गमध्ये कल्याणशतकारकः ॥
विधवाहस्तगस्सोऽयं तादृशोऽपि प्रदूष्यते । पतिपुत्रविहीना या विधवा सा प्रकीर्तिता

पतिमात्रविहीना या सपुत्रा चेन्न दूष्यति ।
सुवासिनीसमा सापि सा दृष्ट्वा यदि वर्त्मनि ॥

विधवा तादृशी घोरा चाभिमुख्येन चेत्कलिः । समागता संभवेद्धि पतिपुत्रैकवर्जिता ॥
सद्य एव भवेन्नूनं रक्तकाकनिरोधतः । महामृत्युर्मनुष्यस्य तस्मात्तत्परमेव वै ॥
गमनाय पदं त्वेकपदं(पदं)चास्मिन्क्षिपेन्न तु । पादप्रसर्पणाद्घोरो रक्तवर्णस्य पापिनः ॥

काकस्य मृत्युरूपस्य रोधे रोगोऽस्य जायते ।
निरुद्धः शत्रुणा वाक्यैः मागच्छेति ततः पुनः ॥

न गच्छेद् देवि सततं श्रेयस्कामी तु पद्धतिम् । पय.कुम्भं सुराकुम्भं मधुभाण्डं तथामिषम्
मांसखण्डं दधिघटं घृतकुम्भं विशेषतः । यदि गच्छन्मार्गमध्ये संप्राप्तं देवकुम्भकम् ॥
वाद्यघोषैः परिवृतं परिवारातिसुन्दरम् । यदि पश्येत्सद्य एव कृतकार्यो भवेद्ध्रुवम् ॥
पश्चादनन्तकल्याणमंगलायतनो भवेत् । मयूरपि(च्छ)नृत्यन्तं मार्गमध्ये विलोक्य वै ॥
कार्यमुद्दिश्य गच्छन्वै कृतकृत्यः प्रजायते । आमिषं भक्षयन्तं तं गरुडं सर्पवैरिणम् ॥

नीलकण्ठं सोरगं वा वभ्रुं वा सर्पखण्डकम् ।
खादन्तं संहरन्तं वा यदि पश्येत्तु वर्त्मनि ॥

## सुनिमित्तानि

तस्य सद्यः सर्वशत्रुविनाशो जायते ध्रुवम् । विप्राशिषः कृता वर्त्ममध्ये दैवात्सदीरिताः

पतिव्रतोदितश्चापि महच्छ्रयो विधायका । पञ्जरस्थै शुकैर्गेहे पालितैरवशोदिते ॥

वचनैरपि कार्याणि विज्ञेयानि मनीषिभिः ।
समीचीनासमीचीना तद्वाक्य मन्तरीरित (ता) ॥

भवेयुरेव कार्याणि नात्र कार्या विचारणा । तस्मिन्मुहूर्ते ब्राह्मे श्रोत्थानसमये यदि
देवतारावकरणं शुभं मङ्गलवाचकम् । अत्यन्तं भावि कार्यस्य ज्ञापकं तद्भवेच्छुभम् ॥
मत तदीय पुरतो अ(ख)रशादपि निर्गतम । श्राव्य वेदन्ति भव्यानां ह्येय दुर्गतिपारकम्
सुखस्वाध्ययस्ना शाजभवनेषु निरन्तरम् । प्रदश्या पालनीयाश्च पक्षिणश्चित्रवर्णका ॥
गृध्रश्येनकोलूककाकश्चैवंचटकसुमका । जडकोटनम्प्रोथप्राणिबिन्दुमत्स्यरा ॥

वर्जनीया पालनार्थे न प्रशस्याश्च वेश्मसु ॥

## गृध्रादीनां गृहारोहणफलम्

कपोतगृध्रोलूकानां गृहसम्बन्धनं परम् । गृहिणस्तस्य जनस्य पीडा तु महती भवत् ।
धूमागमनतो गेहे यजमानो निरन्तरम् । अतिरस्थंमहारोगैराक्रान्तो दुःखभाग्भवेत् ॥

तद्दोषपरिहाराय शौनकोक्तां सुपावनीम् ।
शान्तिं बोधायनोक्तां वा कुर्याद्देवाऽविचारयन् ॥
शान्त्या कृताया सुमहन्मङ्गं श्रेयो भवेन्न चेत् ।
अभवत्तु महानर्थं तस्मान्नैमित्तिके यतात् ॥

सम्यगनेति यत्न बुद्धिमान् सुसमाहितः । यस्य प्रतिपदोक्त यत्नदेव हि समाचरेत् ॥
तदलं बहुना सूक्तं प्रसक्तानुप्रसक्तिनः । वाढव प्रातरुत्थाय देवानां ध्यानमाचरेत् ॥

नद्य सुभूतमन्त्राश्च पुराणोक्तान् पठेदपि ॥

## अपररात्रेकर्तव्यम्

स्वाध्यायनिरतस्येषु तत्र निद्रा भवत्विति । नाध्यय य मन्त्रपठने ध्यायत्वयकला यरा ॥

तस्य तत्रैव सर्वेषु मन्त्रा यथाप्तार्थाऽसि च ।
तीर्थानि सरितश्चैव दानानि विविधानि च ॥

व्रतानि धर्मा निखिलाः कृच्छ्राणि विविधान्यपि ।
वर्तन्ते तेन तस्यास्य तद्वर्णोच्चारणेन वै ॥
सर्वसिद्धिर्भवेन्नूनं श्रवणात्प्रतिवर्णके ॥

## अपररात्रे वेदाध्ययननियमाः

रात्रेऽपरस्मिन् यो मोहाच्छयानोऽध्ययनं चरेत् ।
व्यालो भवेदयं नूनं यद्यशुद्धः शुनि(चि)र्भवेत् ॥
अप्रक्षाल्यानाचम्य दुष्टसर्पो भवेत्किल ।
सताम्बूलास्यतश्चेत्तु हृद्यास्यो व्यालो भवेदिति ॥

वेकच्छा यदि दौर्गत्यं प्रणतः प्राप्नुयादिति । अकच्छो महिषत्वं तु सूतकेन शृगालताम्
अनध्यायेषु दारिद्र्यं कुष्ठरोगित्वमेव च । प्राप्नोत्येव न सन्देहः परमध्ययनात्पुनः ॥
निद्रया तत्फलं नैव प्राप्नोति पुनरप्यति । उलूकत्वमवाप्नोति नष्टायुः प्रभवत्यपि ॥
वर्त्म गच्छन्यदिपुनः पिशाचत्वमवाप्नुयात् । सन्ध्ययोर्मृत्युमाप्नोति शवे निपतने यदि
क्रोष्टृत्वं समवाप्नोति वाहने संस्थितो यदि । बिडालत्वमवाप्नोति द्रुमपादस्थितो यदि
अरण्ये निर्जले क्रूरे रक्षस्त्वं समवाप्नुयात् । खट्वायां संस्थितश्चेत्तु मत्कुणत्वमियादिति
रीक्षत्वं तल्पगश्चेत्तु कटस्थश्चेत्तु काकताम् । भवनोपरि चेन्नूनं कपोतत्वं तथा पुनः ॥
मण्टपोन्नतपृष्ठस्थः तार्क्ष्यत्वं प्रतिपद्यते । श्मशानादिप्रदेशेषु व्याधत्वं च पुलिन्दताम् ॥
श्राद्धभुग्यदि मृत्युत्वं प्रेतत्वं प्रेतभोजनात् । पत्नीसंयोगचपलचित्तो यदि तथा पुनः ॥
समाश्लिष्टः स्वयं तां वा समाश्लिष्याथवापुनः । सूकरत्वं गार्दभत्वं श्वत्वं काकत्वमेवं च
संप्राप्य कौलज्ञानित्वं ज्योतिरिंगणतां ततः । शतजन्मसु संप्राप्य चक्रवाकत्वमृच्छति ॥
तस्मात्तु वेदाऽध्ययनं अत्यन्तनियमान्वितः । कुर्वीतैव विधानेन सुमहद्बाधकं न चेत् ॥
अकृताध्ययनश्चेत्तु सर्वकार्येषु सन्ततम् । तत्पुराणोक्तमन्त्रान्वा नान्तरीकेषु केवलम् ॥
प्रवदेदेव तूष्णीकं न तु मान्त्रिककर्मणि । तत्रादौ शयनाद्बाह्ये संस्थितो भूतले पुमान्
इमं मन्त्रं जपेद्भक्त्या जपस्य च कृताकृतः ॥

## पुण्यश्लोकाः

नमिम च प्रवक्ष्यामि पुण्य मन्त्र च तादृशम् । नान्तरीयेषु कालेषु यूय जपत च द्विजा

ब्रह्मा मुरारि स्त्रिपुरान्तकश्च भानु शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्र शनिराहुकेतव कुर्वन्तु सर्वे मम सुप्रभातम् ॥

इममन्त्र समुच्चार्य परचात् स्वल्प समाहित ।
पुण्यश्लोकान् कीर्तयेच्च पुण्यश्लोकाश्च ते स्मृता ॥

नलादय इति प्रोक्ता तत्कीर्तनमशामनुम् । तत्र वक्ष्यामि हिताय जगतामहम्
पुण्यश्लोका नलोराजा पुण्यश्लोको युधिष्ठिर ।
पुण्यश्लोका च वैदेही पुण्यश्लोक पुरूरवा ॥ ॥

कर्कोटकश्च नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षे कीर्तन कलिनाशनम्
तत्रान्तै सप्रवक्ष्यामि कार्कोटकहरे परम् । असाधारणतो ज्ञेय कीर्तन कलिनाशनम् ॥
नलस्य दमयन्त्याश्च विशेषेण निरूप्यते । असाधारणतो ज्ञेय कीर्तन पापनाशनम् ॥
ऋतुपर्णस्य राजर्षे असाधारणा परम् । विज्ञेय निखिलैरत्र कीर्तन पुण्यवर्धनम् ॥
तत्र साधारणे ज्ञेये सर्वेषामपि सन्तत (म्) । कीर्तनात्कलिनाशञ्च पापनाशनमेव च ॥
तु पुण्यवर्धनञ्च च तेषामत्र च त्रिष्वपि । असाधारणधर्मोऽय एक एव इय (तु) तत् ॥
त्रि साधारणा धर्म सर्वत्रैव हि निर्णय । एतेषां स्मरणादस्माद्युत्थायोर्वी प्रणम्य वै
इम मन्त्रं समुच्चार्य गच्छेत् कार्येषु सन्ततम् । स च मन्त्र प्रवक्ष्यामि भवता विशदाय वै

## प्रातरुत्थाय गमनमन्त्रः

समुद्रवसने देवि पर्वतस्तनमण्डिते । अनेकरत्नसम्पन्ने पादस्पर्शं क्षमस्व मे ॥
बहिरागत्य तत्पश्चान्मत्रगमनेन धर्मत । नलरात्र च सत्र मृद्धानीमपि भक्तिकाम् ॥
मार्दयित्वा दृढा पूर्व यत्नसनादिवा शुभाम् । नैऋत्यामिषुनिक्षेपमात्र गत्वाऽत्र तत्र वै ॥

## पुरीषोत्सर्जनम्

भावयित्वा तृणैर्भूमिं तत्र मूत्रपुरीषयोः। मोचनं वै प्रकुर्वीत रात्रौ चेद्दक्षिणामुखः॥
उदङ्मुखोदितो नित्यं विधिरेवं सदोदितः। मूर्धानमुत्तरीयेण वेष्टयित्वा पुनस्ततः॥
कृत्वा निवीतं यज्ञाख्यसूत्रं कर्णे निधाय च। कुर्यान्मूत्रं पुरीषं च तत्पात्रस्थोदकेन वै॥
तया मृत्तिकयासम्यक् क्षालयेद्गंधवर्जितम।
मृत्तिकाग्रहणं चापि भक्षिकायाः सकाशतः॥
अन्येन कारयित्वैव तत्सकाशात्स्वयं ततः। संगृह्य शौचं विधिना कुर्यादेवान्वहं परम्॥

## मृत्तिकासंख्या

पञ्चवारं गुदे कुर्यादेकवारं च मेहने। करयोः पादयोः पूर्ववदेवेति विधिः परः॥
एतस्य द्विगुणं प्रोक्तं वर्णिनः सन्ततं महत्।
त्रिगुणं तु वनस्थस्य यतीनां तु चतुर्गुणम्॥
एवं नृपस्य वैश्यस्य शूद्रस्य च विधानतः। तत्क्रमेण प्रकथितः मृत्तिकासंग्रहश्च सः॥
अष्टम्यां भौमवारे च सर्वेषां शस्यते किल।
ग्रामात्प्राच्यामुदीच्यां वा मृत्तिकासंग्रहं चरेत्॥
अपराह्णे प्राङ्मुखेन स्थित्वा भूमिं समन्त्रतः।

## मृत्तिकाग्रहणमन्त्रः

प्रणम्य प्रार्थयित्वाऽथ उद्धृतासीति मन्त्रतः। तावकीं वसुधे मृत्स्नां शौचार्थमहमद्य वै॥
संगृहीष्यामि जननि क्षमस्वाशेषमातृके। मन्त्रेणानेन संगृह्य खनित्रपिटकायुतः॥
प्रोथयित्वाथ तामन्ये नैव पुंसा विचक्षणः। गृहमागत्य पश्चात्तु वस्त्रसंशोधनादिना॥
समीकृत्य समीचीनं सुखस्पर्शस्य चेद्यथा।
सुसंस्कृता सा प्रभवेत्तथा कृत्वा विनिक्षिपेत्॥

यत्नतुनश्शुचौदेशे पश्चात्तां च दिनेदिने । तदा तदा मृद्धान्यैव संगृह्य च पुन पुन ॥
शौचं कुर्याद्विधानेन न चेच्छौचेन केवलम् । वैकल्यभाग्भवत्येव पुन सर्वेषु कर्मसु ॥
तादृशेन न संदेहस्तन्मूला हि क्रिया परा । यया कयाचित्कृतया मृदाशौचं वृथा भवेत्॥
कृतमप्यकृतप्रायं तस्मात्तत्परिवर्जयेत् ।

## गण्डूषविधिः

कुर्यात्सदन्ते गण्डूष सम्यग्द्वादशसंख्यया । मूत्रमात्रस्य चेद्भूयो दशाष्टौ वा मृदासकृत्॥
समुष्कं क्षालयेत्सम्यक् शुद्धेन पयसैव हि । अशुद्धेनातितुच्छेन नदुर्गन्धेन कदाचन ॥
न क्षालयेत्तथा शौचं गुह्यं पादकरावपि । अशुद्धजलतोयस्तु शौचं मूत्रपुरीषयो ॥
कुर्यात्पुनरसौ च स्यात्तद्दोषस्य निवृत्तये । शुद्धेन पयसा शौचं पुन कृत्वा विधानत ॥
पादौ प्रक्षाल्य चाचम्य स्नानं कुर्यात्समन्त्रत । नचेदशुद्धस्य पयस स्पर्शनेनैव केवलम्॥
प्राप्तं ह्यशौचमधिक निवृत्तिस्तस्य तेन हि । समन्त्रेण न चान्येन संगेनेति महर्षय ॥
रहस्यमत्र वक्ष्यामि यदुक्तं तन्मया पुरा । द्विमुखशुद्धकतोऽपीव कृतमाचमनं तु यत् ॥
तत्पुनात्यनशात्पापं वदा किमपि नास्ति हि ।
मन्त्रस्नानादिकं कृत्स्नं तत्स्पृष्ट्वैव क्षणाल्लभेत् ॥

## दन्तधावनम्

निर्वर्त्य शौच पश्चात्तु दन्तधावनमाचरेत् । तत्पुनस्तु मृताहेषु गुरूणां यस्य कस्यचित्॥
भ्रात्रादेर्वा कनिष्ठस्य दशादिष्वखिलेष्वपि । अन्नश्राद्धेषु नितरा न कुर्याद्दन्तधावनम्॥
तेषु चेत्तु पुनरसम्यक् श्राद्धकर्तु महात्मन । अपा द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति ॥
तद्भिन्नदिनमासेषु निखिलेषु व्रतेष्वपि । नैमित्तिकेषु पुण्येषु कृच्छ्रादिष्वखिलेष्वपि ॥
तृणपर्णैः प्रकुर्वीत चामामेकादशीं विना । तयोरपि च कुर्वीत जम्बूप्लक्षरसालकै ॥
रसालनर्णरचितदन्तधावनकर्म यत् । पितृश्राद्धदिनं मुक्त्वा तन्न(द्)घ्यतिसन्ततम् ॥
तत्तत्काष्ठविशेषाणां दन्तधावनकर्मणि । तत्तद्दिनविशेषेषु प्राशस्त्य न तु सन्ततम् ॥
तद्विशेषेणसङ्कीर्त्य कृत्वा तद्गुमन्यथिस्तरम् । प्रयोजन न किमपि प्रकृते दन्तधावनम् ॥

वर्णनीयं च सौलभ्यात्तत्तथैव निरूपितम् । पुनश्च संप्रवक्ष्यामि संग्रहेणैव तत्पुनः ॥
श्रतश्राद्धान्यदिवसमात्रेषु क्षीरिणां सदा । प्रशस्तान्येव काष्ठानि दन्तधावनकर्मणि ॥
दन्तधावनतः पश्चात् कुर्यादाचमनद्वयम् । ततः स्नानाय च पुनः कुर्यादाचमनद्वयम् ॥
प्राणायामत्रयं कृत्वा पश्चात्संकल्पमाचरेत् ।
देशं कालं च संकीर्त्य तिथिवारसमन्वितम् ॥

## स्नानमन्त्राः

प्रणम्य तीर्थराजं च तस्मै दत्त्वार्घ्यमुत्तमम् । आपोहिष्ठाहिरण्यादिद्रुपदादिकमेव च ।
हिरण्यशृङ्गाद्यखिलं इन्द्वन्तं पावमानकम् ।
आपो वेति महामन्त्रां सितासितऋगादिकम् ॥
जप्त्वा निखिलमन्त्रान्तान्पावनान्श्रुतिशीर्षगान् ॥

## स्नानान्तरकर्तव्यम्

प्रोक्षयित्वावगाह्याथ निश्शब्दं चोरवज्जले ।
ऋषीन् देवान् पितॄन् पश्चात्तर्पयित्वा च शास्त्रतः ॥
आचम्य च विधानेन मन्त्रेणैव ततः परम् । अनेन तर्पणं कुर्यात्तमिमं वर्णयाम्यहम् ॥
यन्मया दूषितं तोयं शारीरमलतोऽधिकम् । तस्य पापविशुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम्

## वस्त्रोदकदानमन्त्रः

अथ वस्त्रं पीडयित्वा भूमौ सिञ्चेच्छिखाजलम् ।
सर्वाङ्गसलिलं चापि भूमौ तिष्ठन्मुहूर्तकम् ॥
तत्तज्जलार्थिनां नित्यं स्रावयित्वा विधानतः ।
यत्तत्स्वीयांगसंसक्तं तज्जलं वै तदर्थिनाम् ॥
दत्त्वा निकामं तत्पश्चाच्छुद्धं वस्त्रं तु बिभृयात् ।
वहिर्विनिर्गतं स्नातुं सर्वे देवा महर्षयः ॥

द्विज दृष्ट्वातिसन्तुष्ट तत्पश्चात्सलिलार्थिन ।
तिष्ठन्ति तत्तटे नित्य तस्मात्तेभ्यो दिने दिने ॥
कालद्वयेऽतिभक्त्यैव स्नात्वाऽनन्तरमेव वै । सर्वाङ्गसलिल वस्त्रजलमुक्तविधानत ॥
दद्यादनेन मन्त्रेण न चेद्वै शपन्ति ते । मदङ्गवस्त्रकेशाग्रसलिल तत्तदर्थिनाम् ।
अद्य दत्त मया नूनमक्षय्यमुपतिष्ठतु । नित्य कालद्वये स्नान गृहस्थस्य विधीयते ॥
यते कालत्रये तत्स्याद्वर्णिनां तु यथारुचि ॥

## स्नानभेदाः

एकवार द्विवार वा यथेच्छ तस्य सम्मतम् । एव स्नातुमशक्तानां पानीये शीतले परम् ॥
उष्णोदकेन विहित तत्राशक्तस्य तत्परम् । कण्ठस्नान कटिस्नान पादस्नान तथोक्षणात् ॥
मन्त्रस्नानमविज्ञाय न चेद्गोरजसापि तत् ।
सर्वेष्वेषु पुन शक्तिविकलो यदि तत्परम् ॥
छायावगाहन कुर्यात्तत्तु स्नानोत्तमोत्तमम् । विप्रन्यग्रक्ष कुर्वंस्तदशक्तस्तु केवलम् ॥
तच्छायाया जल सिञ्चेत्तच्छायास्नानमुच्यते ।
तस्मिन्नप्यशक्तश्चेत् कापिलस्नानमाचरेत् ॥
दिव्यस्नान विशेषेण स्नानानामुत्तमोत्तमम् । यदा वा लभ्यते तत्तु तदा नैमित्तिक तु तत् ॥
सर्वपापहर पुण्य सर्वेषामपि सन्ततम् । दुर्लभ तद्विशेषेण लभ्य सातपवर्षत ॥
सकल्पावमने तस्य न स्नाता नैव तर्पणम् । धारानिपातपर्यन्त स्नानमन्त्रजपो भवेत् ॥
मन पर्याप्तिपर्यन्त स्थितिमात्र तदा परम् । स्नानमाहुर्महात्मान यथारुचि तथाचरेत् ॥
कायानुगुणत स्नान विहित सन्तत द्विजे ।
आदौ निखिलधर्माणां निदान वर्ष्म केवलम् ॥
सर्वं तदानुगुण्येन कर्मजाल समाचरेत् । शिरस पादयोर्गात्रोरङ्गानां यस्य कस्यचित् ॥
कायमात्रोपद्रवस्य यदा सभावना भवेत् ।
स्नानतस्त्विति तत्त्याज्य मुख्य त्यक्त्वैव केवलम् ॥

गौणस्नानं तदा कुर्यान्मन्त्ररूपादिकं शिवम् ।
आर्तवान्ते सूतकान्ते कर्तुं स्नानं विधानतः ॥
अशक्ये सति तद्भूयः कारयेद्विप्रवर्त्मना । तावता शुद्धिरेव स्यात्सद्यःस्नानं निवार्यते ॥
आरोग्यान्ते पुनः स्नानं कुर्यादेव विधानतः ।
सदा शुद्धजलस्नानात्परं शौचं प्रकीर्तितम् ॥
आपत्सु येनकेनापि गौणस्नानेन तद्भवेत् । आपत्सुसर्वदागौणस्नानं मुख्यमिति स्मृतम् ॥
स्मृतिसंभावनास्नानाज्जायते चेत्तदा नरः । सर्वथा तन्न कुर्वीत किंतु भौत्यादिकं चरेत्
नित्यस्नानाशक्यकायः शीतवातादिकाक्षमः ।
यथा कायानुगुण्येन कुर्यादेवाखिलां क्रियाम् ॥
सर्वाङ्गमार्द्रवस्त्रेण शोधयेत्तेन केवलम् । अशक्तश्चेत्स्नानफलं लभेतैव न संशयः ॥
शरीरमाद्यं धर्मस्य कारणं केवलं स्मृतम् । ग्रहणे वा पितृश्राद्धदिवसे स्नानवर्जितः ॥
अपि चण्डालसंस्पृष्टः व्रणरोगैकदुर्धरः । सर्वाशौचैकमलिनः पित्रोरेकादशे दिने ॥
दशमे कर्मकालेषु दिवसे द्वादशेऽपि वा । वहूक्ता तादृशेषु (च) विपत्सु स्नानतो यदि ॥
मृतिसंभावना चेत्तु येनकेन प्रकारतः । साक्षात्स्नानं परित्यज्य शक्तौ विप्रमुखेन वा ॥
पुत्रादिमुखतोवापि तत्कृत्वा तत्समाचरेत् । शक्त्यभावे सर्वथापि सलिलस्पृष्टिमात्रतः ॥
भावना चेद्बाधकस्य भस्मस्नानादिनैव हि । संसाधयेत्प्रेतकर्म छायास्नानादिनापि वा ॥
कर्मणो करणे तस्य तादृक् कालेऽस्य केवलम् ।
स्मृतिर्यद्य भयोः पश्चात् बाधकं सुमहद्भवेत् ॥
प्रेतत्वमुभयोश्चापि भवेत्किल तदा पुनः । येन केन प्रकारेण कृते तस्मिन् सपिण्डने ॥
तद्गौणस्नानतो वापि तत्पितुः किल तद्भवेत् । पितृत्वं देवरूपत्वं तावता कृतकृत्यता ॥
मृतस्य पूर्वं भवति तस्मात्कायानुगुण्यतः । स्नाने कृते तावतैव कर्मसाद्गुण्यमश्नुते ॥
आपत्कालेषु सर्वेषां गौणं तत्तादृशं परम् ।
स्नानं मुख्यं भवेन्नूनं मुख्यं स्नानं तु बाधितम् ॥
प्रभवेदेव नितरां निखिलं चैवमेव हि । मुख्यं भवेदमुख्यं हि चैवं तदपि केवलम् ॥

अमुख्य मुख्यमेव स्यादिति शास्त्र महर्षिभि । उपदिष्ट सर्वलोकहिताय सुमहात्मभि

## द्विमुख्युदकस्नानम्

नित्यस्नानात्पर नित्य द्विमुख्युदकतो भवेत् । यत्कर्तव्य कर्मजात तदेतदखिल परम् ॥
तत्पूर्वमृत्तिकाशौचकार्यादिषु पुनर्यदि । तज्जल विनियुक्त चेद् गगादिषु हठात्परात् ॥
तद्बुद्धिपूर्वंतस्त्वर्धोदयेऽपि च महोदये । सूर्योपरागादिकालविशेषेषु गुरुष्वपि ॥
न्यक्कृत्य निष्ठीवनतो गुदप्रक्षालनेन च । यत्पाप जायते क्रूर तदवाप्नोति केवलम् ॥
चैलद्वय समुद्धृत्य शुद्ध हस्तद्वयेन वै । उत्तरीय प्रथमत प्रादक्षिण्येन मूर्धनि ॥

### वस्त्रधारणमन्त्रः

धृत्वाऽथ प्राङ्मुखस्तिष्ठन् वस्त्र तद्धारणाय तत् ।
निभृयात्कच्छया युक्त आवहन्तीति मन्त्रत ॥
न चेत्सोमस्य तनूरिस्यतेन यजुषा सदा ।
वाससो धारणे मन्त्री चोदितो अथवा पुन ॥

तूष्णीक वा तद्वेद्वे पादप्रक्षालन तत । कृत्वाऽऽचम्य विधानेन प्राणायाममिषपूर्वक ॥
परमेश्वरतुष्ट्यर्थं प्रातस्सन्ध्यामह शिवाम् । उपासि(ष्ये)ति सकल्प्य मन्त्रप्रोक्षणमाचरे
सन्ध्याकर्मोपपत्तिस्वयोग्यतायै तदुच्यते । आपोहिष्ठेति नवभि यजुर्भि प्रणवेन वै
सयुक्तैरतिशुद्ध स्वे प्रोक्षण तादृश शिवम् । मुखे प्रकथित सद्भि सूर्यश्चेति तत परम् ।
महामन्त्रो वेदमध्य चतुर्विशतिवर्णक । रक्षन्तामिति लोहन्त कर्तारस्तत्ररक्षणे ।

सूर्यश्च मन्युरतस्पश्चात् मन्यूनां पतयस्तथा ।
तत्पापेभ्य सकाशान्मां एको मन्त्रोऽयमुच्यते ॥

यद्वाग्नेरित्यय मन्त्र द्वितीय इति चोदित । अवलुप्तत्वन्त इति द्वात्रिंशद्वर्णको मनु ॥

यत्पाप कृतवानस्मि रात्र्यारात्र्यामितिस्मृतम् ।
ब्रह्म धाम्मीति सप्रोक्त मनस्शब्दाश्च षट ॥

प्रसिद्धा एव नितरां षष्ठ शब्देषु तेषु च । तृतीयस्तदिति ज्ञेय साहचर्येण सत्कृत ॥

छान्दसः स च विज्ञेयः सूक्ष्मदृष्ट्या ततः परम् ।
तदन्वयः प्रकर्तव्यः कर्तारात्रिरहश्च हि ॥
परस्मैपदिलोडन्तः क्रियेयं समुदीरिता ।
यत्किञ्चेति तृतीयोऽयं मन्त्रस्वाहान्तकश्च सः ॥
अष्टाविंशतिवर्णोऽयं जुहोमीति क्रियापदम् । अहं कर्तेति सुस्पष्टः मां कर्मेति तथैव हि ॥
स्वाहाशब्देन होमः स्यात् अत्र पानं स्मृतं किल ।
यथा कथंचिद्द्रव्यस्य त्यागो होम इतीरितः ॥
सूर्यः प्रसिद्धः सर्वत्र सत्यशब्दस्तदर्थकः । असावादित्यवाक्येन श्रौतेनैव तथोदितः ॥
तस्यैवामृतयोनित्वं केवलं तद्विशेषणम् । प्रथमः प्रार्थनारूपः द्वितीयोऽपि तथाविधः ॥
तृतीयो होमरूपः स्यात्त्रिभिः संमन्त्रितंजलम् ।
सर्वपापविनाशाय प्राशयेदिति सा श्रुतिः ॥
भिन्नक्रियात्वान्मन्त्राणां मन्त्रभेद उदाहृतः । यत्र भिन्नक्रिया तत्र सर्वत्र श्रौतकर्मणि ॥
प्रदृश्यते मन्त्रभेदः पूर्वार्थस्यानापेक्षणात् । सापेक्षत्वे तु पूर्वार्थस्य चेदेको भवेत्तु सः ॥
स्योनन्त इति वाक्ये सः तस्मिन्नित्यत्र निश्चितः । एतन्मन्त्रत्रयजलप्राशनं तस्य कर्मणः
अत्यन्तयोग्यतासंपादनाय सन्ततं स्मृतम् । पुनराचमनं कृत्वा दधिक्रावद्वयेन वै ॥
पूर्वोक्तैर्नवभिर्भूयास्त्वापोहिष्ठादिभिः शिवैः । हिरण्यवर्णात्रितया शिवेनेति च मन्त्रतः
चतुर्विंशतिसंख्याकैर्मार्जनं प्रतिवर्णके । गायत्रीयेप्रोक्तियोग्यतार्थं प्रोचुरित्तिस्म तत् ॥
द्रुपदानामगायत्री सर्वमन्त्रोत्तमोत्तमा । सर्वेन(ण)हंसमुत्सर्गहेतवे सा प्रतिष्ठिता ॥
तयाभिमन्त्रितं तोयं त्यक्तं चेत्तावताखिलम् ।
एनोवृन्दं सद्य एव त्यक्तं नष्टं गतं भवेत् ॥

## अर्घ्यदानम्

अथाचम्य विधानेन गायत्र्यैवाभिमन्त्रितम् ।
मन्देहानां विनाशाय त्रिवारं अतियत्नतः ॥

गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्। तद्दोषपरिहाराय कुर्याद्भक्त्या प्रदक्षिणम्॥

असावादित्यो ब्रह्मेति ब्रह्म ध्यायेत्समाहितः ।
तद्ब्रह्मध्यानमेव स्यात्सन्ध्येति ब्रह्मवादिभिः ॥
नित्य सन्ध्यकृतं ध्यानं वारत्रयमतीव च ।
ब्राह्मण्यकारकं तस्मात् यत्त सन्ध्यात्रयं शुभम् ॥
दिने दिने ब्राह्मणेन असावादित्यमन्त्रतः ।
सोऽहंभावनया दिव्यं कृत ध्यानं महर्षय (र्षिभिः) ॥

सन्ध्येति प्रवदन्त्येते श्रुत्युक्ता परमर्षय । ब्रह्मध्यानात्परं कर्म नान्यत्किमपि विद्यते ॥
तत्र ध्यानं मन्त्रवाक्यार्थत्वतः परं महत् । उत्तमोत्तममित्युक्तं तद्वाक्यार्थश्च केवल ॥
न कार्यकारकं प्रोक्तं किंतु सोऽनुभवात्मकः । गुरुप्रसादैकलभ्यो गुरुरेवेश्वरः परः ॥
देवगुर्वोर्न भेदो हि गुरुर्देवाद्विशिष्यते । गुरुः सम्यग्बोधयति तम परिहरेदपि ॥
देवोऽपि गुरुरूपेण समागत्य कृपामय । तद्बोधकः प्रभवति तेनासौ कृतकृत्यताम् ॥

सन्ध्यास्वोत्थेन सततं तस्माद्वन्द्य सदा गुरु ।
सन्ध्यान्ते तु प्रतिदिनं गुरुभ्यो नम इत्यपि ॥
सन्ध्यायै चापि सावित्र्यै गायत्र्यै नम इत्यपि ।
देवताभ्यश्च सर्वाभ्यो वेदेभ्यो वा विधानत ॥

देवेभ्यो वाऽप्यथर्विभ्यश्च मुनिभ्यो नम इत्यपि । नमस्कारं प्रकुर्वन् वै प्रवदन्त्या विशेषतः
प्रदक्षिणं प्रकुर्वीत कामोऽकार्षीन्मनुं जपेत् । तदा मन्युरकार्षीदित्येतत्सन्मनुं जपेत् ॥

## दिङ्नमस्कारः

नमोऽन्तमत्रश्च मन्त्रान्ते वक्तव्य स्यात्त्रिकालके ।
कर्णौ पादौ तथा स्पृष्ट्वा कृताञ्जलिपुरस्सरः ॥

मन्त्रानशेषान् तत्तत्कुलप्रागाचारतश्च तान् । उपदिष्टांश्च सम्मान् जपेदेव विधानत ॥

अर्घ्यान्ते वा तथा गायत्र्युपस्थानान्तरं तु वा ।
नम प्राच्यादिमन्त्रांश्च प्रवरादीन्विधानत ॥

ोतृप्रवरतो नित्यं नमस्कारादिकर्मसु । सर्वेष्वेत्राविशेषेण वदेदध्वर्युमार्गतः ॥
प्रवरस्सः( स् ) तत्र हि स्याद्दर्शादिष्वेव नान्यतः ॥

## प्रायश्चित्तार्घ्यः

अर्घ्यत्रयात्परं कालद्वयस्यास्य व्यतिक्रमे । प्रायश्चित्तक्रियायै स्यादर्घ्यमेकं पुनः स्मृतम् ॥
केचिच्चतुर्थं चेति प्राहुरार्या मनीषिणः । अर्घ्यक्रियासु संत्यक्ता गायत्री या द्विजोत्तमैः
तस्याः प्रत्युपसंहारहेतवे प्रतिलोमतः । जपेदेव विधानेन तत्प्रकारश्च वर्ण्यते ॥

## गायत्रीवर्णसंख्यानिश्चयः

(त् )याद्चोप्रनः यो यो धि हिमधी स्यवदे गोभ । यंणिरेर्वतुविस्सत ॥
प्रतिलोमविधौ यंणि वर्णभेदेन वर्णनम् । अनुलोमप्रकारे तु वर्णैक्येनैव चोच्चरेत् ॥
तस्मिन्नर्थे श्रुतिः सूत्रं प्रमाणं प्रतिपादितम् । सूत्रं तत्सवितुरिति पच्छोर्धर्चश इत्यपि ॥
प्रतीकग्रहणात्सूत्रकारेणात्र ततस्तथा । संहितायामाद्यकाण्डपञ्चमप्रश्नके यथा ।
पाठस्तथेत्येकवर्णस्ययस्य वर्णस्य वाक्यतः । व्यमेकमेव वर्णस्तु संख्यायां तद्द्वयं भवेत्
णयोःस्वीकृत्य भेदं वै संख्या सा कथिता परा ।
चतुर्विंशतिका सर्वैः त्रीणि सूर्ये यथा तथा ॥
गायत्रीमातृवाक्येषु पथि भादिषु केवलम् । तुरीयपादेन तथा तन्मत्रोद्धारणं भवेत् ॥
तान्मत्रानप्यद्य सम्यग्विशदाय निरूप्यते ।
चथिभतन्मुखतः प्रोक्तं रोयोगों सा द्वितीयकम् ॥
रयोदेति तृतीयं स्यः( त् )जनवत्तु तुरीयकम् । वक्ष्यप्रसे पञ्चमं स्याद्देधीचोसेतिषष्टकम्
सप्तमं तणिगमद्वयं हि याद्दो तथाष्टमम् । एतेषामपि सर्वेषां मूलभूता श्रुतिः शिवा ॥
वर्णक्रमैकृकार्याय नान्यकार्यायते न हि । मन्त्रोद्धारः प्रभवति मन्त्रोद्धारेण तेन च ॥
प्रतिलोमानुलोमाभ्यां वाक्यानां न्यसनात्खलु । सर्वसिद्धिः प्रभवति तदेतद्गुरुवाक्यतः
विज्ञेयो हि भवेन्नूनं मन्त्र (स्तदु) पदेशतः । विप्रत्वसिद्धिर्भवति तत्परं तदुपासनात् ॥
तज्जपेन च तन्नित्यं विप्रत्वमतिदुर्लभम् । अतितीक्ष्णतरं स्याद्धि प्रतिनित्यं शनैः शनैः

तादृशस्यास्य मन्त्रस्य व्यागमाडोग्र सङ्ग्रात् । तद्विध वस्वरूपस्य आयत हानिरीदृशी
सा गायत्री वेदमाता महद्माहात्म्यमूलिका ॥

## ओंकारव्याहृतीनां प्रथमा

मादौ व्याहृतिसभूता व्याहृतिसारमुन्का ।
गायत्रीमूल्का वेदा यज्ञा लोकाश्रया शिवा ॥
यथा बीज घटस्तद्धारे सर्वेऽपि तेऽस्थिता ।
भूर्भुव स्वराद्य प्रोक्ता सर्गीना सन्ति तेन च ॥

तार सर्वाधिक प्रोक्त सर्वकारणकारणम् । सर्वैरपि शामन्यदेवलोकैकविग्रह ॥
सर्वयन्त्राश्च नितरां स एव नगबोधक । तदर्थस्वरूपश्च तन् पासनहेतवे ॥
तदुक्तिपूर्वकत्वेन गायत्र्या व्यक्तिरुच्यते । वेदाद्युचारणे तस्मात्तन्मुखे सदृशीयते ॥
तारतो व्याहृतिरिति यदुक्त तन्निगद्यते । सप्तहेगाय भवता विरादाय क्रमेण वै ॥
तालवर्णश्च पादगो बिन्दुनाव्यक्तवर्णक । स्वरोनादनिरोधाभ्यां वैशिष्ट्येतपरो भवेत्
नादेये तु समोवर्ण वेदमारत्रयेण तु ।
तत्त्रयेण च ताभ्यां तु स्वरोऽन्त्यो वाऽखिले पुन ॥

भूरादेनात्र भूलोक ओंकारस्तत्स्वरूपक । भुवर्लोकस्तथा ह्येष भुवर्लोको भुवस्तुत
अखिलको प्रकथितो अव्ययाविति येचन । महर्लोकस्तकारान्त महर्लोकैकवाचक ॥
जन सत्ये स्वकारान्ते पुनपुसकरूपके । लोकैर्वाचके तेऽपि त एते निर्दिष्टा अपि ॥
लोकैकवाचका ह्येता तदुच्चारणपूर्वत । ओंकारो विद्यते तेन त एते तत्स्वरूपिण ॥
भूलोकोऽप्यों भुवश्चाप्योंकार एव न चापर । एव सर्वत्र विज्ञेयस्तत्त्वार्थतत्त्वदर्शिभि ॥
एव सप्त व्याहृतयस्त्रिव्याहृत्यय चोदिता । एतद्द्वयेन ते सर्व गायत्रीमातृकास्तव ॥

जातास्तेभ्यश्च वाक्येभ्यो गायत्री सा समुद्धृता ।
अशिरैर्मिलितैरेते आपोज्योतिरसाश्च ते ॥
तदीया इति विज्ञेया ते ब्रह्मवेति च स्मृता ।
व्याहृतीनां तिसृणां च मध्ये सर्वेऽपि ते पुन ॥
ओंकारमध्ये ते स्युश्चेन्महामन्त्रारयकास्स्मृता ॥

## प्राणायामः

शप्रणवगायत्री तया कार्याखिलेष्वपि । कृत्येषु नित्यादिषु च प्राणायामो दिने दिने॥
क्रमं चापि वक्ष्यामि सर्वानुष्ठानकारणम् । दशप्रणवगायत्रीत्रितयेन विधानतः ॥
र्तव्योरेचकः पूर्वं तदनन्तरमेव वै । तदैव पूरकः कार्यः पुनश्च तदनन्तरम् ॥
कुम्भकश्च प्रकर्तव्यः तद्विधानेन केवलम् । एवमेतत्त्रयं चेत्तु कृतं भवति तत्परम् ॥
ाणायामस्त्वेक एव एवं सर्वेषु कर्मसु । प्राणायामत्रयं कार्यमर्थचिन्तनपूर्वकम् ॥
ावन्मत्रेण नितरां बहुजन्मकृतं तु यत् । आविलौघं तत्क्षणेन आगस्त्वेनश्च केवलम् ॥
अंहोविलयमायाति चित्तशुद्धिर्भवत्यपि । प्राणायामसमोधर्मो प्राणायामसमो जपः ॥
प्राणायामसमो यज्ञः प्राणायामसमो दमः । प्राणायामसमं तीर्थं प्राणायामसमं तपः॥
प्रणायामसमं दानं प्राणायामसमं श्रुतम् । प्राणायामसमो नान्यः पावको जगतीतले ॥
एकवारकृतः सम्यक् प्राणायामोऽखिलप्रदः । सर्वसिद्धिकरः पुंसां बलिपुष्टिविवर्धनः ॥
आधिव्याधिप्रशमको ह्यपमृत्युनिवारकः । ह्यनुष्ठितः प्रतिदिनं कालमृत्युनिवारकः ॥
दीर्घायुष्यैकजनकः शतायुष्याधिकप्रदः । तस्माद्विचक्षणो नित्यं प्राणायामपरो भवेत् ॥
स तु वायोर्निरोधैकभवितव्यः सदाकिल । तथा तदर्थानुसन्धानपूर्वकविधेयः (?) ॥

## प्राणायामासमर्थस्य तन्मन्त्रमात्रपठनविधिः

तथा कर्तुमशक्तश्चेत् ब्राह्मणोऽसौ निरन्तरम् ।
नासां प्रगृह्य तूष्णीकं मन्त्रमात्रमुदीरयेत् ॥
द्विषष्टिवर्णकं वर्णस्वरमात्रेण वा यदि । कृतयकृत्यस्तावता वा त्रिवारोच्चारणात्परम् ॥
तस्मिन् मन्त्रे मन्त्रराजे प्रणवा दश हि स्मृताः ।
चतुर्विंशतिसंख्याकाः गायत्रीयास्तु वर्णकाः ॥
शुद्धव्याहृतिवर्णाश्च पञ्च तेषां पुनस्तथा । उच्चारणेऽपि पञ्चैव व्याहृतीयास्ततो दश॥
मापोज्यो दशकं चाथ महर्द्वयं जनः सत्यं तपश्चेत्यष्टकं स्मृतम् ॥

## अर्थज्ञानवता कृतसन्ध्यावन्दनप्रशंसा

समन्त्रो वीर्यवान् किस्यात्सुस्पष्टे तु तदर्थके। स्वत एवाखिलं तस्य समीचीनं भवत्यलम्
तत्तदर्थमात्रतो भूयः कर्मसिद्धिश्च जायते । य एतं चीयते यश्चैनं वेदेति सा श्रुतिः ॥
कर्म कर्तुर्यादृशं स्यात्फलं तस्मात्ततोऽधिकम् ।
अर्थज्ञानवतां पुंसां तूष्णीकं स्वत एव हि ॥
फलं भवेदिति पुनः सा प्रोवाच श्रुतिः समा ।
अर्थज्ञानैकशून्यानां कर्मकृत्याफलं स्मृतम् ॥
तावन्मंत्रं देवबुद्धिपूर्वं चेदुत्तमं भवेत्। वस्तुतो लोकरीतिस्तु सन्ध्यादिषु विशेषतः ॥
मन्त्रज्ञानैकविकलाः सर्वदेशेषु मानवाः । मन्त्रमात्रपराः केचिदत्यल्पाश्च विशेषतः ॥
तथा क्रियामात्रपराः कर्माभिनयनाः परे । वस्तुतो यत्रकुत्रापि मन्त्रमात्रोऽपि दुर्लभः ॥
अथापि लोके ब्राह्मण्यं गोपनीयं विशेषतः । न प्रकाश्यं बहिर्नित्यं वन्दनीयं सुरैरपि ॥
सन्ध्यामूलमिदं ब्राह्मण्यं मन्त्रमूला च सा परा ।
सन्ध्यामन्त्राश्च सर्वत्र सर्वेषामपि सन्ततम् ॥
समा एव परा दिव्याः महद्ब्राह्मण्यमूलकाः । सर्वेषामपि सन्तीति निश्चयेन दृढेन वै
प्रपालनीयं तत्तस्माद्विवादं तत्र केवलम् । न कुर्यादेव शास्त्रेण कृतोपनयनो यदि ॥
संप्राप्तपूर्णब्राह्मण्य इत्ये (पा वैदिकीश्रुति.) ।

## ब्राह्मणप्रशंसा

शास्त्रसीत्रेण निश्चित्य गौरवेणार्चयेच्चतम् । शिखायज्ञोपवीतैकमात्रेणापि स्वरूपतः ॥
मुखवर्णेन तत्वेन वाचा तद्भाषणेन च । ब्राह्मबीजैकमाहात्म्याद्वैलक्षण्यमतीव च ॥
इतरेभ्यो भृशं तस्मिन्

एवमेकः पाठः

इतरेभ्यो (भृ) शंदैवात्प्रश्चुरेदेव पश्यतः । विप्रमन्त्र विप्रमात्रः कासलस्सततं महान् ॥
पक्षपातः प्रकर्तव्यो विशेषेण प्रवच्मि वः। सर्वेषामपि वर्णानां अप्ययं ब्राह्मणब्रुवः ॥

न्नदानं प्रशंसन्ति नार्हन्त्येवासहिष्णुताम् । दूरीकृतं तिरस्कारं छत्कारं दुष्टभाषणम् ॥
ार्हन्तिदुर्जनाश्चापि दुराचारैश्च निन्दिताः । अन्नमात्रप्रदानेन महतां दक्षिणा च या ॥
ीयते तद्दशांशेन द्वादशांशेन वा पुनः । दत्वोद्वास्यादरिद्रा या विधवाश्चविशेषतः ॥

अपुत्रिण्यः सपुत्रिण्यः यथोत्साहेन वाक्यतः ।
संभावयित्वा यत्किंचिद्दत्वैव स्वानुरूपतः ॥

कालदेशानुगुण्येन दक्षिणा भोजनादिना । येनकेनाप्युपायेन दोपयित्वैव चोद्वसेत् ॥

नयक्कं ( कं ? ) चनतत्पीडाप्रलापैरतिपीडनैः ।
अत्यन्तभाग्यवान् तेषु न भग्नाशान् प्रकल्पयेत् ॥

यः कश्चनापि नितरां वैश्वदेवावसानके । भुक्तिकाले विशेषेण व्रतचर्यासु सर्वदा ॥

जातकादिषु पुत्राणां मौञ्ज्यादिषु तथाप्यति ।
विवाहे पुत्रिकायाश्च दक्षिणा भुक्तिकर्मणि ॥
समागतानवन्यून् वा पण्डितानखिलान् खलान् ॥

## उत्सवादिष्वनाहूतागतानामनिराकरणम्

अनाहूयैव चापल्यादागताननतिदौष्ट्यतः । सुप्रसिद्धदुराचारान् दुर्मुखानतितुच्छकान् ॥
दुश्चरित्रान्विशेषेण पङ्गूनन्धान् दुराकृतीन् । असतोऽतीवसर्वत्र सदा संग्रहकानपि ॥
कृपणान् दुर्गतान्नित्यकलहैकपरानपि । न पीडयेन्न चाक्रोशेन्नावमन्येन्न भीषयेत् ॥
न वदेच्चापि दुर्भाषा वैमुख्यं प्रापयेन्न तु । भग्नान्नैव प्रकुर्वीत कुर्यात्प्राप्तमनोरथान् ॥
सुमुखानतियत्नेन दरिद्रोऽपि यतन्मति । कल्याण्या भाषया सम्यगभिपूज्यैव कर्मसु ॥
तादृशेषु विशिष्टैश्यव पूजयेद्वासयेदपि । एवं सत्यत्र सुमहान् भाग्यवान्मतिमानति ॥

श्रीमान् कृती पुण्यकर्मा कृत्याकृत्यविशेषवित् ।
दयार्द्रहृदयो योगी कल्याणाभिजनो महान् ॥
धनधान्यग्रामसीममहद्राज्यमहाधनी ।
अपि सन् किं पुनः स्वस्य संप्राप्ते पुत्रपौत्रयोः ॥

विवाहे जन्ममौञ्ज्यादिमहाकर्मसु भूरिषु । ज्योतिष्टोमादिकृत्येषु महादानादि कर्मसु ॥

यमयज्ञे शुभागारे पुण्ये शूलगवेऽपि वा। अष्टकायां सर्पबल्यां अपूर्वाधानकर्मणि॥
प्रथमोपाकृतौ पुत्रपौत्रयोर्वा तथाविधे। अपूर्वपुनिशातार्धेट(क्रमु)ःसुमहोढ(त्म)वकर्मणि

कथ समागतान् पूर्वप्रोक्तान् लोकान् महाशया।
समागतान्महद्दुःखाद् दारिद्र्येणैव दुर्गतान्॥
प्रकुर्याद्विमुखान् शक्तः स्वयमत्यन्तभाग्यवान्।
यदि कुर्यादुत्सवेषु दरिद्रानागतान् गृही॥
विमुखानस्य साश्र(श्री)स्तु सद्यो नश्येद् ध्रुवम्।
समागता ये सुमुखा प्राप्तकामा मुदायुताः॥
अभ्यागताश्चातिथयः यस्य गेहान्महामन।
अहो प्रतिनियर्तन्ते तस्य श्रीः सातिवर्धते॥
प्रतिनित्यं विशेषेण चन्द्रमा इव शुक्लक।
तदेव जन्म तस्यास्य भव्यं भाग्यं च तादृशम्॥
श्लाघ्यक्रमणनाल प्रशस्तं प्रकृष्ट हि तत्॥

## ब्राह्मण्यप्रशंसा

कृत्स्नया किं तादृश हि ब्राह्मण्यं वेदसम्मितम्। देवसन्त्वमतिश्लाघ्यं पावनं पावकं महत्॥
सपन्निदान कल्याणकारकं पापवारकम्। आपद्दुःखादिशमनं चिन्तितार्थप्रदायकम्॥
तस्य दर्शनमात्रेण नरः पापात्प्रमुच्यते। आधिव्याधिप्रशमनं कालमृत्युहरं परम्॥
आश्रेयश्रीकारकं भद्रमूलक चिन्तितार्थदम्। सर्वतीर्थैकरूपं तत्सर्वयज्ञफलप्रदम्॥
तद्वाक्यजलमात्रेण सर्वपापानि देहिनः। प्रनष्टानि भवन्त्येव हीनवर्णोऽपि जायते॥
महावर्णः सद्य एव यद्यनुग्राहका द्विजा। तेऽनुग्रहैककर्तारः नरशाखिनोऽपि वा॥

सप्त पञ्च त्रयो वापि यदि स्युः श्रोत्रिया शिवा।
वेदाध्ययनहीनाश्चेच्छास्त्राध्यायिन एव वा॥
पूर्वोक्तसङ्ख्याकाः स्युश्चेदपात्रोऽप्यत्र पात्रताम्।
दद्यादेवाविलम्बेन नात्र कार्या विचारणा॥

यत्र त्रयो वा लभ्याः स्युः श्रोत्रियास्तत्र केवलम् ।
परिषत्त्वं महत्प्राप्तं केवलं भवति ध्रुवम् ॥
ब्रह्मविष्णुमहेशानां इन्द्रादीनां दिवौकसाम् ।
त्रयस्त्रिंशत्कोटिसंख्याकानां सुमहतामपि ॥
सान्निध्यमपि तत्रैव भवेदेव न संशयः ।
गङ्गादीनां च सर्वासां नदीनां पुण्यपाथसाम् ॥
सप्तानां शतसंख्यानां सर्वपापविरोधिनाम् ।
षट्कोटिकोटितीर्थानां वेदानां चापि कृत्स्नशः ॥
समुद्राणां च सर्वेषां श्रोत्रिया यत्र वा त्रयः ।
सान्निध्यं तत्र भवति परिषत्त्वं च तत्र हि ॥
यत्राश्रोत्रियसाहस्रं दशसाहस्रमेव वा । परिषत्त्वं न तत्रास्ति तदानुग्रहकत्वकम् ॥
न प्राप्नोत्येव नितरां श्रोत्रियत्वं च केवलम् ।
शाखाध्ययनतः स्याद्धि तादृग्विप्रो महानति ॥
तदर्थज्ञो यदि पुनः साक्षादीश्वर एव नः ॥

## शाखाध्ययनहीनानां निन्दा

विना तु शाखाध्ययनं ये सभायां महाजडाः । परिषत्त्वं प्रकुर्वन्ति न तत्त्वं पतिपद्यते ॥
अनुग्रहो यत्कृतस्तैर्न स तत्फलदायकः । तूष्णीको ह्यकृतप्रायः व्यर्थ एव भवेच्च सः ॥
मन्त्रैकपूतं तत्कर्म मन्त्रा वेदैकवर्तिनः । तत्तत्क्रियासाधनाय ते मन्त्राः स्युरपेक्षिताः ॥
तस्मात्स्वाधीनमन्त्रा ये ब्राह्मणाः श्रोत्रिया इति ।
प्रसिद्धाः सर्वकृत्येषु प्रशस्ताः स्युरनुग्रहे ॥
वेदाध्ययनसंस्कारजन्यसंस्कृतभाषया । यथोच्यते तथैव स्यात्तेन ते स्युरनुग्रहे ॥
निरपेक्षककर्तारः कर्तुं चाकर्तुमेव च । अन्यथाकर्तुमपि च शक्ताः स्युः सन्ततं हि ते ॥
यथा चित्रमलिखिताः मर्त्यदेवसुरद्विपः । गजगोवाजिभुजगमृगहर्यृक्षवानराः ॥

स्वकार्यकरणाशक्ता तथा वेदविवर्जिता । अनुमन्तृकरा प्रोक्ता महद्भिर्ब्रह्मादिभि ।

यदि मौढ्येन ते तूष्णीं श्रोत्रियान्तर्गता स्वत ।
परिषन्नपि निघ्नन्तस्तयाग्निरिति वदन्ति चेन ॥
जिह्वायां तु तदीयायां प्रोतयित्वा दण्ड तु तन् ।
शूलदूता कालसूत्रे याम्याम्न ताडयन्त्यपि ॥
नरर्म च तथैव स्याद्यथाप्रोक्त पुरा किल ।
तस्मात्तु कर्मसाद्गुण्यहेतवे वैदिकान् शुचीन् ॥
ज्ञात्वा परिषद् कुर्यादन्यथा नाशमेति तन् ।
तत्कर्मापि प्रनष्ट स्यात् परिषत्करस्य तस्य च ॥

## मध्यलक्षणम्

विधायका महान्त स्युर्वेदशास्त्रार्थवेदिन । धर्माधर्मैकनिपुणा कृत्याकृत्यविशेषगा ॥
पुण्यपापाविभीताश्च दयादाक्षिण्यतत्परा । पौर्वापर्यविशेषज्ञा देशकालानुगुण्यत ॥
प्रवाचनैकनिपुणा तथा प्रवचनेऽपि च । त्रय एव हि ते प्रोक्ता ह्रीश्रीभीगुणसयुता ॥

निधय सर्वविद्याना सुमुखा सुलभा परम् ।
एतेभ्योऽप्यधिको ज्ञेय सौजन्यश्रीनिकेतन ॥
अत्यन्तदाक्षिण्यपर कल्पनीयोऽनुवादक ॥

## अनुवादकलक्षणम् अनुवादककृत्यम्

अनुवादककृत्य तदत्यन्ताशयमुच्यते । आदौ ज्ञेया गृहपतेर्वय कर्म धृतिर्मति ॥
कृत च क्रियमाण च चरित्र चेष्टित च तन् । बलाबले शक्तिभाग्यसामर्थ्यनियमादय ॥
अनुवादकसङ्घेन सम्यगेतेऽखिला अपि । विज्ञेया स्यु पुनरपि तेषा परिषदामपि ॥

मानस तच्चरित्रं च तद्वाक्यानि पृथक् पृथक् ।
तथाविधायकाना च कार्याकार्यादिक पुन ॥

उक्तिप्रत्युक्तिवाक्यानि सर्वेषामपिकृत्स्नश । अनुवादपुरोवादपश्चाद्वादादिकानपि ॥

त्स्नान् शास्त्रमहामार्गाविततथैवतान् स्वयम् । अनूद्य वेदमार्गेण त्रिवारं सम्यगेव वै
थोर्ध्वबाहुर्निष्कपं तस्योद्धरणहेतवे । अन्यूनानतिरिक्तेन प्रकुर्यादिति सा श्रुतिः ॥
त्रादौ शास्त्रदृ(द्द)ष्टानि यजमानस्य केवलम् । सभाभ्यनुज्ञा प्रथमोऽभ्यनुज्ञा स्वकृतिस्ततः
रिषद्दक्षिणापश्चाद्दशस्नानानि तानि वै । मृदादीन्यदि शुद्ध्यर्थकहेतूनि प्रवराण्यति ॥
ावनानि प्रशस्तानि महर्षिगदितान्यपि । संकल्पश्चापि वरणं त्रयाणां च पृथक् पृथक् ॥
सर्वेषामपि भूयश्च तत्तत्कृत्वानुरूपतः । अन्तरा ब्राह्मणं कृत्वा नान्दीं पुण्याहपूर्वतः ॥
कृत्वैव च विधानेन प्राच्याङ्गं च ततश्चरेत् । तथैव वैष्णवश्राद्धं शालाहोमश्च पूर्वकः ॥
विज्ञापनाप्रकारश्च वचनं वाचनं तथा । अनुवादकवाक्यैकप्राधान्येनैव केवलम् ॥
विधायकानां वाक्यानि पर्यालोचनयैव हि । शास्त्राणामपि सर्वेषां पश्चात्परिषदामपि
परस्परैकवाक्यानि सर्वेषामेकवाक्यतः । निश्चयेन ततःपश्चादेकैकत्वेन तत्परम् ॥
यजमानमुखं दृष्ट्वा त्वं वदेति ततः पुनः । वाक्यं परिषदां श्रीमद्वचनं तेन तत्परम् ॥
अनुवादकवाक्यं च तत्तच्छ्त्यनुसारतः । कृच्छ्रानुष्ठानतस्तस्य परा सा कृतकृत्यता ॥

जाता तवेति य ( त् ) प्रोक्तिः शालाहोमस्ततः पुनः ।
उत्तराख्यश्च परमो गोदानं दक्षिणादिना ॥

उदीच्यनामकं दिव्यं तच्छ्राद्धं च ततः परम । भोजनं ब्राह्मणानां च भूरिदानं विशेषतः
दशदानानि पुण्यानि सर्वपापेभ्य एव च । मुक्त्यैभूयासमित्येव यजमानस्य चिन्तनम् ॥
सर्वं तदेतत्तरणोपायाः मर्त्यस्य देहिनः । प्राणिमात्रस्योपदिष्टाः सर्वे विप्रमुखेन वै ॥
सर्वपापोत्तारणस्य ब्राह्मणा एव वेदिनः । उपायाः कथिता वेदशास्त्रकल्पादिभिर्दृढम् ॥
विना विप्रमुखं कर्म न किञ्चिदपि विद्यते । कर्ममात्रे ब्राह्मणो वै साक्षीसर्वस्य वेधतः ॥
ब्राह्मण (स्य कृतं) पूर्वं ब्रह्मणा वेधसा तथा । ब्रह्मणा रहितं कर्म तस्मात्कर्तुं न शक्यते ॥
ब्राह्मणानां तद्धनस्य निक्षिप्तस्य स्वशक्तितः । विभागः शास्त्ररचितः इत्येव श्रुतिसूत्रतः ॥

पादः परिषदं गच्छेत्पादो गच्छेद्विधायकान् ।
पादोऽनुवादकं गच्छेत्पादं कृच्छ्रेषु विन्यसेत् ॥

एवं यो ब्रह्ममुखतः प्रायश्चित्तं करोति वै । तरत्येवाशु तस्मात्तु कृतकृत्यो भवेदपि ॥

ोक्तेषु सर्वेष्वेतेषु श्रोत्रियो वेदतत्त्ववित्। उत्तमात्युत्तमौ ज्ञेयौ पावकौ पङ्क्तिपावनौ॥
रदारपरान्नाभ्यां प्रतिग्रहविशेषतः। दुष्क्रियाभिर्ब्राह्मणत्वं हैन्यमेव प्रपद्यते॥
परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात्।
परस्त्रीचिन्तया चित्तं ब्राह्मणस्य निरन्तरम्॥
एतद्दुष्टस्य चेदेवं भविष्यति हि केवलम्। महात्मनो वैपरीत्यं ब्राह्मणस्य विजानतः॥
वेदप्रवचनादास्यं कार्तार्थ्यं प्रतिपद्यते। नित्यकर्मवशौ हस्तौ मानसं ब्रह्मचिन्तनात्॥
सर्ववेदधरो विप्रो यदि शूद्रान्नतत्परः॥

## शूद्रान्नप्रतिग्रहीतृनिन्दा

सद्यः पातित्यमाप्नोति तदन्नं तत्परित्यजेत्।
आहिताग्निः सदापात्रं सदापात्रं तु वेदवित्॥
ात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे। आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमेव तत्॥
ूद्रावामं कदाचिद्वा न गृह्णीयात् ततस्तराम्। विशिष्य तत्पितृश्राद्धे तेन दत्तं सुचेतसा॥
ाद्दुद्देशेन मूढात्मा प्रतिगृह्य दुराशया। मलिनीकरणात्पापान्मालिन्यं प्रतिपद्य वै॥
विप्रत्वस्य स्वनिष्ठस्य स्वीयजातिच्युतो भवेत्॥

## तत्प्रायश्चित्तम्

तद्दोषपरिहाराय ब्रह्मकूर्चविधानतः। तपःकृच्छ्रं पुरा कृत्वा पक्षयावकभोजनः॥
चतुर्विंशतिसाहस्रगायत्रीजपतस्ततः। द्वादशब्राह्मणानां च भोजनेन ततः पुनः॥
गां दद्यादिति सर्वाणि गर्जन्ति जगतीतले।
विविधान्यपि शास्त्राणि सौ(स)कृदेव कृतस्य वै॥
एवमाद्वादशादुक्तं तदूर्ध्वं परितो ध्रुवम्। शूद्रान्नजीवी न भवेत्प्राणैः कण्ठगतैरपि।
शूद्रान्नशूद्रसंपर्कान्मासमात्रेण वाडवम्। शूद्रीकृत्यावशात्पश्चाच्चण्डालत्वं करिष्यतः॥
एकस्य शूद्रमात्रस्य पौरोहित्यं द्विजाधमः॥

## रजकादिभ्यः प्रतिग्रहफलम्

एकस्य शूद्रमात्रस्य पौरोहित्यं द्विजाधम । संपाद्य पक्षमात्रेण रजकत्वं प्रपद्यते ॥
रजकस्य तथा सर्वं सम्प्राप्यैव दिनत्रयम् । दाश(स)त्वं समवाप्नोति तस्य तन्मासतो यदि
सम्प्राप्तश्चेद्द्विजो मूढ सूनत्वं प्रतिपद्यते । तस्य मासेन तत्कृत्यात्पौरोहित्या(त्यकर्मणा)
तिलघातकजातित्व लभते ब्राह्मणाधम । तिलघातकपौरोहित्येन मासे न हाद्विज ॥
सुराकृत्त्वमवाप्नोति मासतानूनमत्र व ॥

## रजकदाशतिलघातुकादिभ्यः प्रतिग्रहप्रायश्चितम्

प्रवक्ष्मि येषां सौलभ्यान्निष्कृतिं शास्त्रचोदिताम् ।
चापायमयान कृत्वादौ सरसवं स्नान वत ॥
कृत्वा यथावत्तत्रैव पुन स मादिन (?) । लब्ध्वा विप्रमुखात्पश्चाद्दत्वा गोत्रयमेव च ॥
यथाशक्ति ब्राह्मणानां भोजन च सपर्यया । कृत्वा तदर्हसामुक्त पुनर्ब्राह्मण्यमश्नुते ॥

## भिल्लनीचकिरातपुलिन्दादिपौरोहित्याश्रयणप्रायश्चितम्

भिल्लानां चाकिरातानां पुलिन्दानां महारिणाम् ।
यवनानां च हूणानां पर्वराणां दुरात्मनाम् ॥
पौरोहित्याश्रयाभ्या च गृहचर्यादिबोधनात् ।
नक्षत्रतिथिवाराणामुक्त्या तत्पापशान्तये ॥
मन्त्रतन्त्रजपादीनां करणे न च केवलम् ।
सद्यो वैकल्यमासाद्य न्यूनता जातिदैन्यताम् ॥
सद्भ्यो महद्भ्यो ज्ञानिभ्यो न्यक्कृतैश्चेतिनिन्दिते ।
पराभूतिं च तुच्छत्व सर्वाभाषणतामपि । सर्वेषामस्पृतित्वं च संप्राप्यैव च तत्पुन ॥
चण्डालतुलित पश्चात्तेषु चापि निकृष्टत्व । तुच्छजातिर्भवेदेव नात्र कार्या विचारणा॥
तस्यैतस्यापि वक्ष्यामि दुष्कृत्यस्यातिपावनीम् ।

सन्ततं यावकाहारो मार्गमभ्येतितापतः ।
धनुष्कोटौ विधानेन स्नात्वान्मासत्रयं शुचिः ॥

कालत्रयेऽपि नितरामघमर्षणमन्त्रकैः । जले निमग्नो नियतो द्रुपदामपि पावनीम्
दशप्रणवगायत्रीं प्राणायामविधानतः । वायोर्निरोधनं कुर्वन् स्वकृत्यं चापि संस्मरन्
कालं नयेद्यथाशास्त्रं पुनः संस्कारकर्मणा । गोपथ्यकप्रदानेन शक्त्या ब्राह्मणभोजनात्

शुद्धो भवेदन्यथाऽसौ पूर्वां गतिमवाप्नुयात् ॥

## स्वर्णकाररथकारादिपौरोहित्यनिषेधः

स्वर्णकारस्य लुब्धस्य रथकारस्याल्य पापिनः ।
सूनस्यायस्करस्यापि पौरोहित्यात्क्षताधिकम् ॥

दिवाकीर्त्यस्याघमूर्तेः पौरोहित्यं तु दुष्करम् । तन्मन्दिरप्रवेशेन तत्प्रतिग्रहकाम्यया

कीर्तिर्यशोलक्ष्मीः श्रीः शोभा सौम्यता परा ।
भगो दाक्ष्यः सहश्चैव बलमोजो धृतिर्दमः ॥
तत्क्षणाद्विलयं यान्ति वैरूप्यमपि जायते ।
रात्रौ तत्स्मरणान्नूनं अश्रूयलक्ष्म्याग्रहेऽस्य सः ॥

स्यातां प्रविष्टौ सुतरां तस्मात्तत्कीर्तनं दिवा । कर्तव्यं हि प्रयत्नेन तत्क्षत्यमपि केवलम्
क्षुरकर्म च नोच्चार्यं स्मरणीयं यतो नतु । तादृशस्यातिपापस्य पौरोहित्यं द्विजाधमः

करोति यो वा मौढ्येन तस्यैते नरकास्थिताः ।
ये लोके कालसूत्रादिनामका यमलोकके ॥
नालं ते निखिलेनैव संग्रहेण वदामि वः ।
बहूक्त्वा (क्त्या)किं महाभागा ग्राह्यो वाच्योऽपि नैव सः ॥
किंतु नित्यं स पापी तु प्रेक्षणीयोऽपि नैव तु ।
यदि दृष्टः स मूढात्मा कदाचिद्दैवशादपि ॥
सद्यः सूर्यविलोकःस्यात् पुण्डरीकाक्षमेव च ।
स्मृत्वा च द्रुपदां दुर्गां शचीं लक्ष्मीमुमां तथा ॥

दशानामथगायत्री जपेदपि महद्भिरास।
नक्षत्रपीठी शक्तिर्गमिन नित्यो भवन्ति केवलम्॥
न भवेदेव नितरां देशाय मनुगोहित। सर्वत्रापितुनमामपौरोहित्येन केवलम्॥
महतोऽपि भवन्नून तस्मात्तन्मार्दितमतः। पौरुषामभ्यस्तान्यौरोहित्येन नन्दनम्॥
तपस्यास्वीयरापानामान्योऽपि न भराय॥

## वेदशास्त्रादिपौरोहित्यनिषेधः

सर्वप्राणेन नितरां पश्यायीपीपुरोहित। न भवेदेव कर्मेन क्षय चित्त तु दुस्तरम्॥
अत्यन्तनिन्दित शास्त्रपौरोहित्य महात्मभि। तद्देकदिनमात्रेण धनाधोगनिद्रा सदा॥
पौरोहित्येन नितरां करदीपिकजीविनाम्।
ज्ञानपन्मायथ नून उत्साहमात्रविराधनाम्॥
मन्त्राप्य परधाद्दु स्नेन गर्जोतन प्रपन्नते। गुरुवारेष्वसमाप्यो गोपालानां पुरोहित॥
भौमवारेष्वसभाप्यो मत्स्यघातिपुरोहित। त्रियामासु न सभाप्यो ग्रामपालपुरोहित॥
भानुवारेष्वसमाप्यो चित्रकारपुरोहित। स्थिरवारेष्वसभाप्य शास्त्रराजपुरोहित॥
इन्दुवारात्प्रभृत्येव शबराणां पुरोहित। सौम्यवारेष्वसभाप्यो यवनानां पुरोहित॥
सर्वेषां रथकाराणामन्त्यजानां च शिल्पिनाम्। मौक्तिकानां तुन्नवायचर्मकानां पुरोहित
बुधवारे न प्रशस्ता भाग्यगादिषु कर्मसु। पौर्णमासीष्वमास्वेव चर्मकारपुरोहित॥
सम्भाषादिष्वयोग्योऽपि किं वा समावर्तनादिषु। सूतनक्षत्रमाहिष्यभण्डहारकजीविन॥
पौरोहित्येन ये ते वै सत्रात्लिन्त्रन केवलम्। न समाप्या विशेषेण न प्रष्टव्यारच रात्रिषु
शुक्रवारेषु सर्वेषु करदीपोपजीविन। न दर्शनीया यत्नेन परं सायासु तेषु वै॥
प्रतिष्ठन्ति श्रीयनेन तस्मात्ते वर्जनन्तरम्। सदा भव्येषु पुण्येषु कल्याणेषु विशेषत॥
च (चमे ?) षु च सर्वेषु प्रक्षणीया दिवा न तु।
अहस्तलक्ष्मीस्तेषु स्याल्लक्ष्मीस्माय स्थिरा भृशम्॥
तस्मात्तु दर्शनं तेषां सायकाले विशिष्यते। सर्ववैतुकवारेषु शिबिकावाहनक्षमा॥

द्रष्टव्या न संभाष्याः कल्याणेषु विशेषतः । दर्शनं प्रवरं तेषां बन्धूनामागमेषु च ॥
मौञ्जीविवाहसीमन्तपुण्यशूलगवादिषु । नितरां न प्रवेष्टव्यः कुरूडानां पुरोहितः ॥
मृतकाशौचकालेषु तन्तुवायपुरोहितः । न संभाष्यो विशेषेण प्रेक्षणीयोऽपि नैव तु ॥
अन्नस्वीकारकालेषु शुभकार्याय केवलम् । अत्यन्तावश्यकोऽयं स्यात् तन्तुवायपुरोहितः ॥
। तीर्थजीविनो नित्यं तिष्ठन्तस्तत्र भूरिशः । सर्वजातीयसंघातधनग्रहणलोलुपाः ॥
वर्ज्यावर्ज्यैकराहित्यमानसा दुष्टचेतसः ॥

## शूद्रार्थमानीतपवित्रपाणिब्राह्मणस्यहव्यकव्यादिनिषेधः

शूद्रार्थानीतसद्दर्भपवित्रधृतमुष्टयः । अत्यन्तनिन्दिताः पापाः न योग्या हव्यकव्ययोः
वाङ्मात्रेणापि नार्च्याःस्युर्नवन्द्या करसंपुटात् ।
वेदशास्त्ररतास्तेऽपि न पङ्क्त्यर्हाः कदाचन ॥
पुण्यक्षेत्रकृतावासाः तादृङ्निन्दितकर्मणाम् ।
करणाद्दूषिता एव भवेयुर्ब्राह्मणा अपि ॥
पुण्यक्षेत्रकृतावासान् स्वकर्मनिरतानपि । तत्क्षुद्रशूद्रतत्तीर्थप्रतिग्रहमहाविलम् ॥
च्युतित्वं विप्रतस्सद्यः कारयत्यतिसत्वरम् । प्रतिग्रहरता विप्रा पुण्यतीर्थतटेष्वपि ॥
वयमेवात्र कृत्स्नानां दानानां ग्राहका इति ।
वदन्तः सततं क्रौर्यप्रोक्तिपूर्वंचवि च विकाः (वचांसि च) ॥
त एव कीर्तिता ( नित्यं ? ) पापिनो ब्रह्मराक्षसाः ॥

## प्रेतान्नभोक्तृनिन्दा

एतत्समाः प्रेतभुक्तिपरा अपि न संशयः । त्रिभुक्तितष्षोडशस्य नग्नप्रच्छादनस्य च ॥
नवश्राद्धे कुटुम्बस्य श्राद्धे भुक्त्यष्टतस्तथा । एकाहनामकश्राद्धे सकृत्तत्प्राशनस्य च ॥
तथास्थिपायसस्यापि ब्राह्मण्यं नष्टमेव हि । पुनरुद्धरणं नास्य तन्नष्टं नष्टमेव हि ॥
दुष्कर्मनष्टब्राह्मण्यः ख्यातोऽयं नित्यसूतकी । न संस्पृश्यो विवाहादिशुभकर्मसु सन्ततम्

न प्रवेश्यो न पूज्यश्च न संग्रह्यश्च सर्वथा ।
वेद्वक्षिवान्नपुल्कसंयोजन्म स्वयं पुन ॥
बालरण्डा भवेन्नून तस्मादेनं निरन्तरम् । चित्रमिनदग्वोल्कातुल्यं न पश्येच्छुभकर्मसु॥
यद्यय देहमस्तर कदाचिद्वशादपि । स्पृष्ट्यास्त जलेनैव संप्रक्षाल्य करेणं वै ।
स्पर्शं दक्षिण स्पृष्ट्वा नासिकान्तं च तारत ।
शिरारं व्याहृतिरचापि जपित्वैव पुनस्तत ॥
इद विष्णु जपेचापि नासौ नोचेद्वेद्(द्वि)वि । दौर्भाग्यप्रथमं पात्रं शरणं निखिलागसाम
त एते ये ( ? ) भोक्ता निखिलैनासतोच वै ।
न योग्यास्सर्वकार्याणामित्येवेति मुनिश्चयात् ॥
न हव्येषु न कव्येषु शान्तिपौष्टिककर्मसु । लौकिकाद्यविशेषेषु पुण्यवैदिककर्मसु ॥
स्वबुध्या नाह्वयेन्नित्यं नापि संभावयेदपि । यद्यागत स्वय ते तु पुरस्कार्या न चैव हि॥
न गौरव प्रकुर्वीत तादृश्य तत्र चाश्रयेत् । सत्कुल चोपकार या नाह्नीकुर्याद्विशेषत ॥
कथञ्चन विशेषेण परिषत्सु न योजयेत् । विधायकेषु वा नून सूरेष्वपि विचक्षण ॥
परित्याज्याश्च ते वै स्यु सन्तत ग्रामयाजका ।
तथावाजान्यपरा पापा नृत्यन्तरविहीनत ॥
एतावदेतत्कार्याय समष्टिघनकल्पित । क्रूरवृत्तिविशेषोऽन्य ये वा तद्वृत्तिनो द्विज ॥
अशक्ता वापि ते सर्वे वर्जयेतान् सर्वकर्मसु ॥

## परित्याज्याब्राह्मणलक्षणम्

परित्यजेद्विशेषेण वेदिनोढा(दा)म्भिकानपि ।
काकवृत्तीन् व्याघ्रवृत्तीन् बकवृत्तीन् दुराशयान् ॥
सुतरां वर्जयित्वैव समीचीनान् सुचेतस ।
येनकेनापि सन्तुष्टान् सद्वृत्तीन् पुण्यपापयो ॥
कृतचित्तान् विचारेषु सदाचारपरानपि ।

सौजन्यनिलयान्शान्तान्स्थाप्यपक्षविवर्जितान् ।
परद्रव्यपरक्षेत्रपरदारपराङ्मुखान् ॥
गृह्णीयात्सर्वकृत्येषु ब्राह्मणान् ब्रह्मवादिनः ॥

## वैश्वदेवकालागतानामनिराकरणम्

यादृशो यः कश्चिदपि वैश्वदेवावसानके ।
क्षुत्तृष्णाभ्यां समायुक्त आगतश्चेत्तदा गृही ॥
शक्तौ सत्यामन्नदानमात्रेण सुतरामयम् । संतर्प्यश्च विशेषेण प्रपाल्यः तिन्मवाक्यतः ॥
तिरस्कार्यो न वाच्यश्च तस्मिन् काले विशेषतः ।
सर्वेऽपि पात्रतां यान्ति भक्तदानाय गेहिनः ॥
विप्रवेषेण सततं तन्तुमात्र प्रधानकः । संप्राप्तपूर्णब्राह्मण्य इत्येव सततं मतिम् ॥
कुर्वन् सुमहदाप्नोति सौभाग्यं ब्राह्मणोत्तमः । अन्नप्रदानकालेषु परेषां विद्विषां द्विषाम् ॥
तेषां चापि समानां तामर्चां कुर्यान्न चान्यथा । शाकसूपप्रदानादिविषये पक्षपाततः ॥
एकपङ्क्त्युपविष्टानां न्यूनाधिक्यं न कारयेत् ॥

## सद्ब्राह्मणानां भिन्नपङ्क्त्युपवेशननिषेधः

करणात्तस्य नितरां पात्रकं सुमहद्भवेत् ।
सदाचारपरान् शान्तान् श्रोत्रियान् ब्राह्मणान् सतः ॥
ज्ञातत्रिपूर्वकान् साधून् तादृशोऽपि स्वयं सदा ।
भुक्तिकाले भिन्न पङ्क्तौ बुद्ध्या नैवोपवेशयेत् ॥
तादृशान् यदि मोहेन ब्राह्मणान् पङ्क्तिपावनान् ।
परित्यज्यान्यतो भुक्तिमात्रेणासौ पतत्यधः ॥
अश(।)स्त्रीयत्रनमहानियमाभासहेतुना । सद्यो विप्रतिरस्कारकिल्बिषात्पतितोऽभवत् ॥
सत्कर्मविकलस्त्यक्तः विद्याशौचे पराङ्मुखः ।
दुराचारो ( ? ) तान् तादृशान् ब्रह्मणोत्तमान् ॥

दुराचारखुवर्त्मभ्यां भिन्नपद्धत्युपवेशनात् ।
सद्यो भ्रष्टश्च म(प)तित ब्राह्मण्यात्किल्बिषी भवत् ॥
मन्त्रार्थो ब्राह्मणमुखाद्विज्ञेयो नान्यवर्त्मना ।
मन्त्रार्थस्य वदा सर्वेऽपि विप्रोच्चारणपूर्वकात् ॥
अनूच्चारणतश्चापि स्वरयाधीना स्मृतेश्च वै ।
तादृशान् ब्राह्मणान्नून त्यजन् मुक्ती तु वहत्तिषु ॥

कथ तरेदय मूढो गुरून् गुरुसमानपि । वेदमन्त्रे क्रिया सर्वा वेदमन्त्रस्तप क्रिया ॥
सर्वक्रिया वेदमन्त्रैस्तस्माद्वेदपरो द्विज । वदस्य वदिनश्चापि न भेद इति गोभिल ॥
वेदमेव जपेन्नित्य यथाकालमतन्द्रित । जपान्तरेण किं तस्य नित्य वेदजप पर ॥

गायत्र्या वेदमातुस्तु जपमात्रेण केवलम् ।
ब्राह्मण्य सुस्थिर सम्यग्गायत्री तादृशी शिखा ॥
गायन्त त्रायते यस्मात् गायत्रीत्युच्यते बुधै ।
न गायत्र्या परो मन्त्र सा सर्वश्रुतिमध्यगा ।
यज्जपेनाखिलतप सिद्धो भवति सन्ततम् ॥

यज्जपेन विना सर्वं साक्षादीशसमोऽपि वै । द्विजमात्रो निपतति तत्तुल्योऽन्यो मनुर्न हि

तस्मिन्नक्षाणि सर्वाणि धम्म (धान्या) नि निखिलान्यपि ।
तदर्थविस्तर सूत्रा लिङ्व्यासस्समेव हि ॥
नान्यन्निदिध्यासन स्यात्तत्पद्मोक्तिस्थितेऽद्य च ।
यो नो धियो बोधयति कुर्विद कुर्विद त्विति ॥
तस्मिन्नेतस्मिन् समये उदयास्तमयादिना ।
तार्तीयीकपदस्यार्थस्तत्र स्यात्तु धिय पदम् ॥

द्वितीयावचन भूरि तद्बहुत्वान्न चैतरत् । न षष्ठि बहु तत्प्रोक्त वचन चेति सूरिभि ॥
प्रचोदयाद् बोधयति यस्य देवस्य तादृश । सवितुस्तद्वरेण्य वै वरणीय विशेषत ॥

नित्योपास्यमिति ज्ञेय भर्गो धीमहि क पर ।
अथस्त्वदिति सप्रोक्त सवितुश्चापि तादृश ॥

नित्योपास्यं तद्भर्गस्तु तेजोध्यायी तु इत्यसौ। अर्थप्रकथितः सर्वैर्महद्भिर्ब्रह्मवादिभिः ॥
कथं नपुंसकं भर्ग इत्युक्ते तु प्रवच्मि तत्। यशो भर्गः सहश्चेति साहचर्येण तत्तथा ॥
भर्गइत्याह सा साध्वी तेज एवेति चोदनात्। सर्वलिंगैः सर्ववाच्यैः सर्वशब्दैरयं विभुः॥
प्रोच्यते खलु तेनात्र गायत्रीति हि फण्यते। तेन स्त्रीलिंगसंप्रोक्तिः ब्राह्मणो नैव दूषणम्॥
दैवतं देवतादेवः इति लिंगैर्यतः स्मृतः।
गायत्र्याख्यं तु तत्तेजोध्यायाम (ध्यायेम) इति वै मनोः ॥
तस्यार्थ इति कृत्स्नार्थो निश्चितः सर्ववेदिभिः। एतन्महामन्त्रमात्रोपदेशेनैव बाडवः ॥
सर्वाचार्यः सर्वगुरुः कृतार्थश्चापि जायते। तज्जपो विप्रमात्रस्य त्रिसन्ध्यासु दिने दिने॥
दशकान्यूनतत्कार्यः तन्न्यूने स जपो ध्रुवम्। ब्राह्मणत्वस्थापनार्थं जागरूपो भवेन्नतु ॥
सहस्रपरमां देवीं शतमध्यां दशावराम्। सन्ध्यां नोपासते ये तु कथं ते ब्राह्मणाःस्मृताः॥
ये सहस्रं जपंत्येनां गायत्रीं ब्राह्मणोत्तमाः। न तेषां श्राद्धभोक्तृत्वहैन्यं तत्स्यात्कदाचन
यथोपदिष्टा गायत्री त्यक्तुं विप्रैर्न शक्यते। कदाचित्सर्वथा तद्वदुपरिष्टास्तदुद्भवाः ॥
वेदाद्या निखिलाविद्यास्तदुक्तश्च क्रिया अपि ॥

## वेदत्यागनिन्दा

त्यक्तुं तदुल्लङ्घयितुं ब्राह्मणेन न शक्यते। वेदस्वीकरणे त्यागे प्रतिसंवत्सरेऽपि च ॥
होमपूर्वं गुरुमुखादुपदेशात्परं श्रुतेः। उपसर्जनतस्तस्या ये वाङ्गत्वेन(मात्रेण)शब्दिताः ॥
तेषामप्युपदिष्टत्वान्न संलङ्घ्यो हि सर्वथा। यत एते चोपदिष्टाः गुरुणा वह्निसन्निधौ॥
वेदहोमात्परं प्रत्ययने तैर्ष्या तथा पुनः। श्रावण्यापि चोत्सर्गोपाकृत्योः प्रतिवत्सरे ॥
त्यागश्च ग्रहणं नित्यत्वेनैव प्रतिपादिते। उपदेशाःस येषां तेऽनुल्लंघ्या महत्तराः ॥
तदुक्तान्यपि कर्माणि कर्तव्यान्येव सन्ततम्। उपदिष्टमहामन्त्रत्यागे तु सुमहान् परः ॥
प्रत्यवायो दृढतरो द्विजमात्रस्य पेशलः। अत्यन्तपीडाकरणे परं (?) दिने दिने॥
धारणाध्ययनं कार्यं अपूर्वाध्ययनं न तु। तदानीं कर्मकालत्वाद्ब्राह्मणानां महात्मनाम्॥
अपूर्वाध्ययनस्यात्र नित्यं कालो न लभ्यते।
तस्माद्वेदादिसंत्यागस्तदा कार्यो महात्मभिः ॥

सत्यागमपि तेषां वै वेदप्रोक्तेन वर्त्मना । प्रकुर्यान्नान्यमार्गेण स मार्गश्च निरूप्यते ।
स्नात्वाऽऽचार्यो दर्भपाणिः रचितक्षुरकर्मभिः ।
वर्णिभिर्निखिलैः शिष्यैः ब्राह्मणैः कर्मतत्परैः ॥
समन्वितस्तु सङ्कल्प्य प्रतिष्ठाप्य विधानतः ॥

## उत्सर्जनविधिः

पावकं चक्षमन्त्रेण तर्पयित्वा प्रपूजितान् ।
स्थापितान् पूजितान् पूर्वमीशान्या दिशि तत्क्रमात् ॥
जुहुयाच्चक्षुषोरन्ते काण्डर्षीन् काण्डदेवताः ।
सदसस्पतिकान् सर्वान् वेदान् वेदादिनैव हि ॥

ऋग्वेदादौ च गायत्रीं ऋषमाज्येन तत्परम् । हावयित्वा यजुर्वेदे छन्दोबद्धे तथाविधे
वाक्यबद्धे वर्णमात्रप्रधाने पादरूपके । होमं कृत्वाथ सामान्यं तत्परं तु चतुर्थकम् ॥
हावयेदेव विधिना यजुर्वेदे तु तत्र वै । वर्णत्रयात्मकं मन्त्रद्वयमादौ ततः पुनः ॥
चतुर्वर्णात्मकं मन्त्रद्वयं वै तदनन्तरम् । देवो व इति मन्त्रः स्यादित्येवं सति केवलम् ॥
मन्त्रमात्रेण होमो हि प्रवृत्ते कर्मणस्त्वथ । होमः कथं भवेदत्र विषये सति चेति वै ॥
तस्यैव हि समाधानं छन्दोबद्धं तादृशम् । एकमेव भवेद्वाक्यं द्वात्रिंशद्वर्णकल्पितम् ॥
अत्र वाक्ये अष्ट इतिस्थाने शत इति स्म वै । गणभेदेन सा सत्या पूर्णायेति छन्दतः ॥
मागतो हाय इत्येन छन्दोनिद्धिम्नाहन । प्रधानश्च जुहुयाद्धोमं यथ गुरुः वेदारम्भणमञ्जसा
उत्सर्जनाङ्गभूतं वै करिष्येत्यखिलानपि । कुशासितं कुशाशयं तादृशान्वाचयेच्च तान् ॥
स्वस्वदार्दिकमेणैव सर्वान् वेदान् प्रवाचयन् । कल्पान् व्याकरणं चापि वेदलक्षणजालकम्
ज्योतिःसूत्रं वेदलक्षणं च दशशास्त्रं ततः पुनः । मीमांसाद्वितयं चापि चेतिहाससमूहं ततः ।
सत्यं तपश्चेति ततस्तपोवाक्यं च वाचयेत् ।
एवं सर्वान् वाचयित्वा स्वस्वाध्योक्तिप्रपूर्वकं ॥
उत्सृजा वै वेदाश्चेति परिधानीयवाक्यतः । प्रवाचना परं सम्यग् उत्सर्गं न समाचरेत् ॥

उपाकर्माण्येवमेव श्रावण्यां तत्समाचरेत् ।
वेदादयः स्त्रीकृताश्चेदियान् वेदोऽखिलः समः ॥
स्वीकारोत्सर्गयोरेवं वेदानां प्रतिवत्सरम् । उपदेशमुखेनैव कर्तव्यत्वं श्रुतीरितम् ॥
तस्मात्तएते निखिला वेदविद्यादयः सतः ।
ब्राह्मणस्यानुल्लङ्घ्याः स्युस्तैरुक्तानि तु यानि वा ॥
कर्माणि कर्तव्यत्वेनव विहितानि समासतः ।
तान्येवेति न चान्येन यदि तानि पराश्च याः ॥
विद्या अनुपदिष्टा हि तास्तस्मान्निखिलाः पराः ।
अत्यन्तावश्यकत्वेन न संग्राह्याः कदाचन । यद्यं तदविरोधेन स्युश्चैतानि हि वैदिकैः ॥

## व्यतिरिक्तविद्या

स्वीकर्तुं शक्यते नो चेत् तानि सर्वाणि ताश्च वै ।
स्वीकर्तुं नैव शक्यन्ते एतद्भिन्नास्ततः पराः ॥
शिल्पविद्यादिवत्प्रोक्तास्तदुक्ता अपि तत्क्रियाः ।
अविरोधे परिग्राह्या विरोधे सति ताः पुनः ॥
अत्यन्तदूरतस्त्याज्याः मानवं तत्र केवलम् ।
यद्वै किञ्चेतिवाक्येन भेषजत्वेन चोदितम् ॥
तच्छास्त्रं तेन संग्राह्यं मनुनैव प्रकीर्तितम् । यद्यप्यनुपदिष्टं तत्तथा गौतमनिर्मितम् ॥
सूत्रकारकृतं सर्वं कश्यपादिप्रकल्पितम् । तदाज्ञया विरचितं शास्त्रं पाराशराख्यकम् ॥
वेदव्यासेन रचितं शंखेन लिखितेन च । रचितं धर्मसिध्यर्थं कृतं कात्यायनेन च ॥
यदेतदखिलं शास्त्रं वेदसूत्राविरोधतः । सर्वसाधारणेनैव यदेतत्प्रतिपादितम् ॥
तदेतत्सकलं ग्राह्यं तद्भिन्नं यत्परित्यजेत् । सर्वस्यामपदिष्टत्वादत्यन्तावश्यकं स तु ॥
अविरुद्धं धर्मशास्त्रमात्रं सर्वर्पिसम्मतम् । अत्यन्तानुपदिष्टत्वेऽप्येतत्कैश्चिन्महर्षिभिः ॥
वेदसूत्राविरुद्धत्वाद्दर्शनोयं च तेन वै । संग्राह्यत्वेन तद्धर्मकार्याणां नित्यकर्मणाम् ॥

वो रकत्वेन सुतरां तत्प्रयोगक्रमोक्तित । विधायकत्वेन केषांचित्सम्मत तन्निरूपणम् ॥
तारव्याहृतिगायत्री साक्षात्प्रस्तारत्वमंना । यथा प्रस्तार विस्तार विभूतिर्वेदमात्रके ॥
तथा शेषचतुर्वेदद्विव्यप्रस्तारजन्यत । ऋक्त्रीवतस्समुत्पत्तिस्तद्ब्राह्मणा तयोरपि ॥

मीमांसासूत्रयो सत्यनपोवाक्येतिहासयो ।
नान्येषामिति निष्कर्षस्तस्मादेषां च सूरभि ॥

पुराणानां स्मृतीनां च वैपम्यभियद्दित्यलम् । वेदप्रस्तारतच्छिष्यभृचीभजगतेस्तराम् ॥
अभावेन पुराणादिग्रन्थानां तादृशा तथा । स्मृतिनामपि तन्मध्यकृतप्रक्षेपणादित ॥
अप्रामाण्येऽत्र सपाने तत्कृत्ये महतामपि । आर्षानार्षविभागैस्त प्रमाणस्य कस्यचित् ।
विशेषदर्शनादेस्तु जनकस्य दृढस्य वै । राहित्येनैव नितरां तत्साम्य तन्महत्वकम् ॥
यत्तु न घटतेऽनीव तेन चैतेषु केवलम् । विवादार्थेष्वागतेषु वादिनां भिन्नभिन्नत ।
परिहारस्तु ते तेषां तत्तद्ग्रन्थगत यच । तत्तत्कल्पितशङ्काश्रान्त्यवैनैव क्षम न तु ॥

विद्यासाहस्य तेषां षड्वेदादीनां तु सर्वथा ।
तस्या कल्पितशाकायाश्चरणव्यूह वाक्यत ॥

प्रस्तारलक्षणाद्यैश्च राहित्येनैव सन्ततम् । प्रामाण्य स्वत एतेषां औत्पत्तिक इतीरित ॥
पदस्य वर्णमात्रस्य वा वाक्यस्य स्वरस्य वा । व्यत्यासो यत्र कुत्रापि भेद प्रक्षेप एव वा ॥
घटते नैव सुतरां वेदमात्र शिवात्मके । तत्रात्यन्त भागरूका स्तत्तद्विशदकर्मणि ॥

प्रस्तारचरणव्यूहलक्षणान्यखिलान्यपि ।
किञ्च वेदाश्च सूत्राणि कल्पा शाखा समन्तत ॥

अध्यासनं यथनम पदक्रमसुसन वै । अतिस्पष्ट सुप्रसिद्धा प्राजापत्यादिसंज्ञया ॥

काण्डत्वेनैयनीति चात्र छन्दांसि सख्यया ।
मन्त्रा इयतत्कर्माणि याज्याश्चापि पुरोरुच ॥
पुरोनुवाक्या सामिधन्य प्रैषा न्यूङ्खा प्रपाठका ॥
अनुवाकाश्च काण्डाश्च सूक्तान्यध्यायसख्यया ॥

पदानीयन्ति वर्णानि प्रश्नामादिनामत । अत्यन्तमिति क्रमाभ्यां मर्यादावरिघट्टिता

शक्यार्था एव तेनैते वेदांश्छदांसिकल्पका: ।
शक्यार्था एव नितरां प्रमाणेत्वेन चोतिता: ( चेरिता: ) ॥
शक्यास्ते परं प्रोक्ता अप्रामाण्ये प्रतिष्ठिता: । यद्यप्यत्र पुनर्वेदवाक्यमेकं तु वर्तते ॥
वेदा वा इति वाक्यान्तर्गतानन्तस्य मानसम् ।
इदमेव प्रकथितं साम्नः शाखास्तथाविधः ॥
प्रोक्ताः सहस्रसंख्याकाः यजुःशाखाः स्वतन्त्रकाः ।
एकं शतं संख्यया ताः ऋगादीनां विधायकाः ।
आयुर्वेदधनुर्वेदगान्धर्वादिधुरंधराः । तस्मात्तत्रत्यानन्तस्य पदस्य न तु तादृशे ॥
अध्यापनाद्यशक्यार्थं ग्रन्थबाहुल्यकारणात् ।
ऋक्सामादिकशाखानां बहूनामपि केवलम् ॥
तदनुग्राहकत्वेन शिक्षकत्वेन राजवत् । शतानामपि शाखानां सैकानां तन्नियोजने ॥
विनियोगः सर्वदृष्टः पृथक्त्वेन परस्परम् । मन्त्रतन्त्रक्रियाभेदशतकेऽप्यत्र केवलम् ॥
औद्गात्रहोत्रयोस्तद्वत्तद्भेदेन कर्मसु । शस्त्रस्तोमस्तोभपृष्ठगीतिसंभिन्नभिन्नतः ॥
विधिदृष्टा मार्गभेदाः सहस्रादिप्रभेदतः । नैतावता ते विज्ञेयाः अशक्यार्था इति ध्रुवम् ॥
शाखाबाहुल्यतश्चापि क्रियाबाहुल्यतस्तथा । मन्त्रबाहुल्यतस्तन्त्रप्रयोगक्रमविस्तरैः ॥
मन्त्रोच्चारणभेदैश्च तदाचारादिकीर्तनैः । अनन्तास्त इतिप्रोक्तास्तत्तच्छाखास्तु वच्मि वः ॥
तैस्तैस्तु शाखिभिः सम्यगध्येतुं तत्क्रियास्तथा ।
ज्ञातुं कर्तुं सम्यगेव शक्यन्ते किल सूक्ष्मतः ॥
अनायासेन निखिलैरास्तिकैर्वैदिकोत्तमैः ।
बहूक्त्वा किं पुनर्वच्मि वैशद्या याति सौख्यतः ॥
यवैश्च तण्डुलैराज्यपयस्सोम दधि ( ...? ) । यवाग्वादिदशद्रव्यैरग्निहोत्रं तु तादृशम् ॥
एकं दशविधं प्रोक्तं मन्त्रतन्त्रक्रियादिभिः । एतदत्यन्तगहनमशक्यं किमु पश्यत ॥
कर्तव्यनिश्चितधियां एतदत्यन्तसुन्दरम् । सुलभं सुखदं श्रीमत्यक्तकाठिन्यरञ्जितम् ॥
एवमाचमनं त्वेकं मन्त्रतन्त्रविभेदतः । तैस्तैः शतगुणं प्रोक्तं किमशक्यं तथाविधम् ॥

ज्योतिष्टोमादयस्त्वेव बहुरूपा श्रुतीरिता । नाशक्या एव सुतरां सुलभा देशकालत ॥
एकोऽप्यय क्रतु श्रीमान् साध्या वत्सरतस्तथा। मासतश्च चतुर्विंशद्दिनतो द्वादशादित ॥

एतादृगुक्तया सोऽयं किमसाध्य शक्य एव वा ।
अनन्तमार्गभेदैस्तैरनन्तत्वात्प्रपश्यत ॥
अपरे ज्ञेय एवेति किं वा चैतद् ईदृश ।
अभ्यासात्सुलभ सूक्ष्म अनभ्यासे तु केवलम् ॥

हालाहलाधिकरचेति भयव्यामोहकार्यति । बहुना किं स्नानमेकमादौ शतविध स्मृतम्॥
मन्त्रतन्त्रक्रियाभेदै तैस्तैरुक्त महारमभि । तदसाध्यमतश्चेति तद्गतिर्गहना परा॥
इति त्यक्तु तु तदुक्त सर्वमेव शतोत्तरम् । अनन्तत्वेन च प्रोक्तं प्रस्ताराल्लौकिकादपि ॥
कृत्यादिछन्दसा वृत्तसङ्ख्यातु महतीति वै । स्पष्टत्वेनैव सर्वत्र ज्ञात्वा यद्यपि तावता ॥
नास्त्येव हि महाभीतिर्निर्दिष्टप्रमाणत । अतिसौलभ्यतो ज्ञातु वृत्ताना तादृशामपि॥

तत्त्व स्वरूप लगयो (लघ्वस्य) सङ्ख्यान च तत परम् ।
अध्ययोगश्चरमपि यथा सौलभ्यभागयम् ॥

तद्वद्वेदाश्च सूत्राणि तान्यङ्गानि विनैव हि । ज्ञानेन बहुलायास तत्त्वरूप तथाविधम्॥
मात्राबल वर्णधर्मसन्तानातानतत्त्वगा । ज्ञातु सुरैन शक्यन्ते तस्माद्वेदेषु तेष्वपि ॥
यत्र कुत्र ग्रन्थराशौ शङ्काप्रामाण्यसंशया । न भवेयुर्हि महतां ज्ञानिनां मतवर्त्मन ॥
विशेषदर्शन तस्य वेदप्रस्तार एकश । विशेषदर्शने तस्मिन् अप्रामाण्यैकवारकौ ॥
नष्टोद्दिष्टे तत्र चापि सर्वसंशयवारक । छन्दःक्रियाप्रकारोऽथ तत्र सङ्ख्यानमुच्यते ॥
अध्वयोगपुनस्तत्र प्रतिवर्ण पृथक् पृथक् । तस्मादेतेषु सर्वेषु विद्याभेदेषु कृत्स्नश ॥
उपदिष्टेषु विशयो नास्त्येव सुतरां खलु । नैव स्मृतिषु सर्वासु पुराणेष्वखिलेषु वा ॥
तस्मात्तन्मध्यसम्प्राप्तप्रक्षिप्तग्रन्थविस्तरै । तानि सर्वाण्यप्रामाण्यत्व लङ्घितशरीरत ॥

आचारसंशयेष्वत्र सम्यक् स्युर्न विधायका ।
सर्वसाधारणेष्वेषा कार्येष्वपि च कर्मसु ॥
परस्परविरुद्धेऽपि सत्सु शाखान्तरेष्वपि ॥

## सूत्रादीनां विधायकत्वम्

विधायकाः स्युर्नितरां न स्वातन्त्र्येण सर्वथा ।
विधायकत्वं स्वातन्त्र्यात् तेषामेवोचितं परम् ॥
विधानामुपदिष्टानां सूत्रादीनां कथं पुनः ।
इत्युक्ते तु प्रवक्ष्यामि सूत्राणि किल षट्स्वपि ॥
वेदपाठानुसारेण प्रवृत्तानि किलान्यथा ।
न स्वातन्त्र्येण तस्मात्तु छन्दोवन्निखिलान्यपि ।
भवन्ति सूत्राण्येवेति जगदुर्ब्रह्मवादिनः । तत्राद्यावौद्भवं पाठमनुसृत्य महान् पुरा ॥
चक्रे बौधायनं सूत्रं सोऽयं श्रीमान् विचक्षणः ।
तत्पाठस्तु यदा तारो व्याहृत्यादिक्रमेण वै ॥
स्वमेव रूपं विस्तारं स्वस्मिन् लीनं स्थितं महत् ।
विध्यर्थवादमन्त्रौघब्राह्मणाद्याकृतिः स्वयम् । शरयात्म्य विस्तारयामास जातस्तु यः क्रमः
सं उद्भवाख्यः कथितो वेदप्रस्तारवर्त्मना । स उवे(?)यानचान्येन तत्प्रस्तारश्च छन्दसाम् ॥
अलौकिकानामेव स्यात्सोऽप्यलौकिक एव हि ।
भवितव्यो हि विदुषां छन्दोविचितिगामिनाम् ॥
गणाश्च वैदिका एव भवेयुस्तत्र केवलाः ।
न लौकिकाः कचिद्भूयो लौकिकाः स्युश्च वर्त्मनाम् ॥
छन्नविच्छिन्नसच्छन्नप्रच्छन्नेषु न चान्यतः । पश्चादापस्तम्बसूत्रं ब्रह्मपाठानुसार्यभूत् ॥
स पाठो ब्राह्मणः सर्वकर्त्ता साक्षात्स्वयंभुवा । सच्चिदानन्दरूपेण नित्येनानुपमेन वै ॥
स्वाकारप्रणवाविर्भावाकारं येन केनचित् । अविद्योयं तत्प्रस्तारमुखेनैव समञ्जसम् ॥
विशदीकृत्य लोकेशमुखानां विधिजालकम् । बोधयित्वाखिलं पश्चादर्थवादौघमेव तम् ॥
राशितो दर्शयित्वाथ मन्त्रजालं ततोऽखिलम् । प्रदर्शयित्वा संघेन तत्संघीकृत्य सर्वशः ॥
ब्राह्मणं तदनु ब्राह्मणेनैव निखिलं शिवम् । बोधयामास जगतां हितायाखिलमञ्जसा ॥

य सोऽय ब्रह्मपाठाख्यस्स ह्यासीन्महान् पुरा ।
सूत्र तदनुसारेण सर्वशास्त्रार्थरञ्जितम् ।

## आपस्तम्बसूत्रम्

आपस्तम्बश्चकारासौ स्वनाम्ना तदल्पकम् । सर्ववेदार्थैकन्यूनाधिक्यशून्य जगद्गुरु ॥
तदापस्तम्बसूत्र स्यादखिल मम निद्धि तम् ।
स पाठ भगवान् व्यास साक्षान्नारायणात्मक ॥
हिताय सर्वलोकाना शास्त्राभेदान् प्रकल्प्य च ।
काण्डत्रयनाम् स्थापयित्वा ऋग्यजुस्सामनामत ॥
अथर्वणादिनासम्यक् पृथक्त्वेन च तान् क्रमात् ।
कल्पयित्वाविसौन्दर्यसौलभ्याभ्यां समन्वितम् ॥
बोधयामास तान् सर्वान् शिष्याणा भावितात्मनाम् ।
सोऽय पाठो व्यासस्त पाठ समनुसृत्य वै ॥

## सत्याषाढसूत्रम्

सत्याषाढमुनिश्चक्रे सूत्र तत्खिल तादृशम् ।
सत्याषाढाख्यमत्र सम्यक् तावींयोक्त तदुच्यते ॥
पुरा कदाचित्कोऽप्यस्मिन् दण्डकाख्यो महासुर ।
दुःखाय किल देवानां वेदान् सर्वान् स्वयं महान् ॥
सगृह्य सर्वलोकाना विनाशाय तु कोपवान् ।
सिन्धौ तिरोहितस्त्वासीन् चिर दत्तवरोऽसुर ॥
तदा देवगुरु. श्रीमान् सत्रदेवहिताय वै । तेषां प्रार्थनयातीव तुष्ट सर्वेश्वरो विभु ॥
मत्स्यरूपेण त हत्वा तान् वेदान् तद्दृशां स्थितान् ।
समादाय जगत्यस्मिन् देवकार्यचिकीर्षया ॥
चतुर्मुखमुखेनैव शिरार्ऽङ्कितवान् किल । भरद्वाजस्तदा श्रीमान् गुणार्सीरसुमन वै ॥

तान् वेदांस्तपसा लब्ध्वा शनकै शनकैरति। कालेन महता पश्चात्तदर्थानखिलान् परान्॥
ज्ञात्वा स्वनाम्ना चकमे सूत्रं परमपावनम्। विशदार्थं लोकहितं तदेतत्सूत्रमुत्तमम्।

## भारद्वाजसूत्रम्

भारद्वाजमिति प्रोक्तं सर्वसारं सनातनम्। तत्तकालेन महता केनचित्कारणेन वै॥
वैशंपायनशिष्योऽसौ कात्यायनमुनिः किलः।
परं गुरोर्विवादेन स्वाधीता निखिलाः पराः॥
समुत्ससर्ज ताः शाखाः तदसत्स्वरोज्झिताः। संकीर्णस्त्वथवन्नूनं त्यक्तरूपाः प्रकीर्णकाः
अत्यन्तयत्नसाध्याश्च व्यत्यस्तस्वरवर्णकाः। अस्पष्टा एकरूपाश्च तदा श्रीमान् महामनाः
सरस्वान्नामको योगी वेदतत्वविशेषवित्।
वेदान् शाखान् पाठकांश्च कल्पयित्वा विभागशः॥
बुध्या संगृह्य संगृह्य स्थापयित्वा पृथक् पृथक्।
एतानवयवान् सर्वान् वेदीयान् छिन्नभिन्नतः॥
एकरूपस्थितान् यत्नाद (?) वेक्ष्या यवीति वै।
अयमेकोऽयमेको वै चेतिरीति शनैः शनैः॥
चकार किल मेधावी सरस्वान् तत्र केवलम्॥
अत्यन्तैक्येन कस्मिंश्चित्प्रदेशेऽत्यन्तदुर्घटे। दुर्विज्ञेये दुर्विगाह्ये वर्णराशिः स्वरादिना॥
संक्षिप्ते छन्दतो श्लिष्टे किं करोमीति चेतसा।
तित्तिरिः शकुनिर्भूत्वा क्षणमात्रेण तादृशम्॥
राशिं सर्वं यथावत्तं चकमे किल सर्ववित्। समीकरणशक्तिस्सा पक्षिणस्तस्य केवला॥
औत्पत्तिकी परा ज्ञेया तेन रूपेण वै ततः। तत्कालं साधयामास तद्रूपेण स सर्ववित्॥
तदा सारस्वतः पाठः परः कोऽपि बभूव हि। तं पाठं तादृशं दिव्यं राहुमुक्तेन्दुवत्तराम्॥
अत्यन्तनिर्मलं शुद्धं पावकं स्वत एव वै
समुद्वीक्ष्यानुसृत्यैवं अग्निवैश्यो (वेशो) महानृपिः॥

## औखेयसूत्रम्

औखेयनामकं सूत्रं चकार विदितात्मवान् । तद्वेतरपरं सूत्रं सर्वसारं समुन्नतम्
सर्वेषां समग्रं सर्ववेदवेदिविभूषणम् । वैखानसाख्यस्तु मुनि वेदे वाजसनेयके ।
यजु प्रभेदे कस्मिंश्चित्पञ्चविंशत्कशाखके । षडशीतिमहाशाखाराजमाने च सन्ततम्

सर्वाधिके सर्ववन्द्ये मुख्ये यजुषि पावने ।
अपि कान्कान्महानर्थान् स्वमत्यालोच्य केवलम् ॥

समादाय समादाय पाठं वासिष्ठनामकम् । अनुमृ च निधानेन कल्पे कल्पे शनै शनै

सूत्रं सत्कल्पयामास शिवं वैखानसाख्यकम् ।
सर्वाण्येतानि सूत्राणि याजुषाण्येव केवलम् ॥

तद्वाध्वर्यवकृत्याय जागरूकाणि सन्ततम् । वेदिनामपि सर्वेषां सम्यक् साधारणानि हि

ब्रह्मा केचिदस्मिन् वै महार्थे त्वध्वरीयके ।
आध्वर्यवाय तत्सूत्रं प्रथमत्वादिति स्वयम् ॥

बौधायनं प्रशंसन्ति सगृह्णन्ति तथा परे । सर्वे विवेदिनश्चेत्तु ऋग्वेदिषु तथा पुन
बह्व सुमहात्मान सर्ववेदविदा वरा । आध्वर्यवाय नितरां आपस्तम्बीयमेककम्
सूत्रं तत्प्रवरं मुख्यं सर्वसूत्रोत्तमोत्तमम् । यजुम्सूत्रं तदेव स्यान्मुख्यतोऽन्यत्तु गौणत
एतत्तुल्यप्रसिद्धेरभ्यभावेनैव तत्परम् । तत्तन्मात्रोपयुक्तं हि न सर्वेषां च वेदिनाम्।
उपयुक्तं भूतलेऽत्र सूत्रं तस्मात्तदेव वै । सर्वसंशयहृद् सर्वप्रयोगविशदं पुनः ॥
सर्वैरंगीकृतं सर्वलोकश्रुतिमनोहरम् । कल्पाख्यं च तदेवैकमार्षं भगवता कृतम्।
सर्वेषां यजने मुख्यत्वेनैव स्वीकृतं महत् । नैतत्समन्ततोऽन्यत्तु सूत्रं पतितपावकम्।
न विद्यते सर्वथैव हौत्रार्थं तु यथा तथा । आश्वलायनसूत्रं वै सर्वस्मादुत्तरोत्तरम्।
हौत्रकार्येऽपि भगवान् स्वतन्त्र पारतन्त्र्यहा । सूत्रयामास वैशद्यमनुसृत्य महामति ।
यजुर्वेदगतैर्मन्त्रैरापस्तम्ब स सर्ववित् । तस्मात्तु तादृशं सूत्रं नास्त्यैवेति सुनिश्चय ।
परमाध्वर्यवं तच्च सूत्रं वाजसनेयकम् । यजुर्वेदार्थघटितं तथाप्येतत्पुन परम् ॥

ससार्वत्रिकमित्येव प्रसिद्धं तत्तु केवलम् । तन्मात्रकं ततस्त्वेकं मया प्रोक्तं विशेपतः ॥
यथैव याजुपं हौत्रं आपस्तम्बेन सूत्रितम् । येन केन तथान्येन यत्र कुत्र न कीर्तितम् ॥

सूत्रकारैश्च निखिलैः गार्ह्य कर्मणि कृत्स्नशः ।
पृथक्त्वेनैव सर्वाणि चोपदिष्टानि सूत्रतः ॥
अग्निहोत्रं पितृयज्ञः शिष्टं श्रौतं यदस्ति तत् ।
आध्वर्यवं तु यजुपा ऋचा हौत्रं तथैव च ॥
साम्नोद्गात्रं च सर्वेपां सममेव न संशयः ।
यथा वा यजुपा हौत्रमिष्टिकाण्डस्य कृत्स्नशः ॥

ऋचा तथाध्वर्यवं न साम्ना वा न निरूपितम् । यजुर्वेदस्तादृशोऽयं ऋचां साम्नां समाश्रयः

नित्यस्वतन्त्रः सुमहान् सदा सर्वनियामकः ।
तदाध्वर्यवसूत्राणि पट्संख्याकानि केवलम् ॥
तदप्येकं प्रकथितं सूत्रं वाजसनेयकम् ।

यजनं खलु सर्वत्र बह्वृचानां निरन्तरम् । छन्दोगानां च तत्सूत्रद्वयं दृष्टं न चेतरत् ॥
आपस्तम्बेन रचितं तथा बौधायनं च तत् । सप्तानामपि सूत्राणां याजुपाणां पुनस्तदा ॥

छन्दोगानां बह्वृचानां ऋग्वेदादेव हौत्रकम् ।
औद्गात्रं च तथा प्रोक्तं सामतस्तु नचान्यतः ॥
हौत्रमृग्वेदरचितं औद्गात्रं च तथाविधम् ।
कण्वानां वाष्कलानां च तथा काठकिनामपि ॥
कौपीतकानां जैमिनिसूत्रिणामपि चोदितम् ।
शाट्यायनिमुखानां तु यजनं न कलौ मतम् ।
उत्सन्नास्ते हि तच्छाखास्तच्च सूत्रं तथाविधम् ।
अनुत्सन्नदशायां तु हौत्रमौद्गात्रकं तथा ॥

तेपामेतद्दृग्विधानवर्त्मनैव न चान्यतः । हौत्रं तु याजुपं यत्तु याजुपाणां तदुच्यते ॥

न चान्येपां कदाचित्स्यात् यदि स्यात्कर्म तद्वृथा ।
याजुपाणां च तद्धौत्रं यावत्तावत्प्रकीर्तितम् ॥

तदन्यत्र पमादिपनकर्मसु च पुन । तदेव हौत्र विहितमाश्वलायनवर्त्मना ॥
हौत्रं तद् याजुष यद्चोदित ब्राह्मणान्तरम् । अत्रनत्रयमितात्मन्यक्त सर्वेर्गीता समग्रस
याज्यापुरोऽनुवाक्याभ्यां प्रधानहविष पुन । तद्विशेषस्य तत्रत्यप्रयोगस्यातिस्य च
सामिधेनीभिरेव वै पुरोऽनुग्भिश्च तादृशी । तथा पत्नीसयाजान्त निरूपणमुदाहित
तस्मात्तदेव सूत्रीयाणामेव नितरां मतम् ॥

## सूत्रान्तरेण संस्कारे दोषः

यदा स्नान गधेय स्यात्तदन्येन कदाचन । सूत्रेण सम्कृतो मोहात् पुन सस्कारमर्हति
स्वसूत्रोक्तेन विधिना न चेन्पातित्यमर्हति । शाखां शिखां च सूत्र च समयाचारमेव च
पूर्वैराचरित कुर्यादन्यथा पतितो भवेत् । पूर्वोक्तानां तु सर्वेषां षण्णामपि च सूत्रिणाम्
शाखेव तैत्तिरी ह्येषा शिखा तेषां पुरो भवेत् । बौधायनीयसूत्राणां तत्र केचन वाडवा

पश्चाच्छिखा दुर्लभा स्युस्तेऽप्यत्र प्रतिपादिता ।
अत्यन्तात्युत्तमास्तत्र तद्विभाश्च तथा पुन ॥
अघन्यातिनपन्यत्वनैवेति निखिला जगु ॥

## शिखाधारणप्रकारः

पुर शिखा यदि पुन याजुषा बहुचास्तथा ।
छन्दोगा या न तैस्तुल्या नौधायनिभिरञ्जसा ॥
पुरश्शिखत्वे किंपुनस्स्येदधिका एव केवला ।
वैदिकाश्च महात्मान पङ्क्तियोग्या इति स्मृता ॥

प्रायेण भूतल सर्वे याजुषा बहुचास्तथा । न्यङ्गवैकल्यरहिता सर्वत्राप्युत्तमोत्तमा ।
छन्दोगेषु सर्वत्र जघन्या स्यु कचित्कचित् । ते त्यक्तवेदसूत्रत्वादन्यवेदपरिग्रहात् ।
सगृहीतान्यसूत्रत्वात् द्वाभ्या तेषा जघन्यता । तेषां सदाप्येतदेव दूषण नान्यदुच्यते ।
कदाचित्ते तु निखिला छन्दोगा कालभेदत ।

ते जैमिनीयाः सूत्रा ये सर्वे पूर्वाःशिखाः स्मृतयः ।
तथा वैखानसाः केचिद्बौधेयाश्च तथा मतः (ताः)॥
भारद्वाजीयाः सूत्रे तु यदि स्युश्चेत्तथाविधाः ।
त एव तेषां विहिताः नान्येषामिति तद्ध्रुवम् ॥
यो वा को वा पुनर्वच्मि स्ववेदं वा स्वसूत्रकम् ।
त्यक्त्वा समाश्रयेदन्यं सद्यः पातित्यमर्हति ।
वेदत्यागेनास्य वेदस्वीकारात्सद्य एव वै ॥
शाखारण्डो भवेन्नूनं न योग्यो हव्यकव्ययोः ।
न पङ्क्तियोग्यश्च तथा स तु स्यान्नित्यकिल्बिषी ॥

तद्दोषपरिहाराय पुनर्वेदं समभ्यसेत् । पश्चात्पुनः संस्कारेण धेनुदक्षिणया च सः ॥
शुद्धो भवेन्न चेन्नैव त्यक्तसूत्रश्च चोदितः । एतेनैव प्रकारेण स्वसूत्रात्संस्कृतः शिवः ॥
न चेद्भ्रष्टो न संदेहोऽप्यप्रवेश्यश्च पङ्क्तिषु । न समत्वेनोपवेश्यः सभासु स तु गर्हितः॥
कदाचिद्दैवतोमार्गमध्ये यदि मृतस्य चेत् । श्रोत्रियासन्निधौ विप्रदुर्घटे गहनेऽथवा ।
तल्लक्षसूत्रतः कृत्वा येन केन प्रकारतः । पश्चात्सम्यक् स्वसूत्रोक्तविधिना चित्तपूर्वकम् ॥
सर्वं तत्पैतृकं कर्म धर्मज्ञसमयस्तथा । यदि कीकटदेशेषु विप्रशून्येष्ववर्त्मसु ॥
संप्राप्तं प्रेतकृत्यं तदमन्त्रापेक्षया परम् । येन केनापि विधिना संस्कारं तन्निवर्तयेत् ॥

## आहिताग्निविषयः

अथाहिताग्निदूराग्निर्नष्टाग्निर्वा तथाविधः । मृतश्चेत्तस्य तूष्णीकं दहनं चेत्समञ्जसम् ॥
न चेत्तस्य पुनः कर्तुं कर्म यत्पैतृमधिकम् । येन केन प्रकारेण यद्वा तद्वा कृतं यदि ॥
तत्परं तस्य विधिना कर्मणः करणे बहु । बाधकं प्रभवेन्नूनं तथा तत्तु समाचरेत् ॥

शिखानिधानं सर्वेषां चौलकर्मणि शाश्वतः ।
छन्दोगानां तु गोदानव्रते तत्कथितं पुनः ॥
चौलाभावेऽपि तूष्णीकं तृतीये वत्सरे तु तत् ॥

## उपनयने शिखाधारणम् जातकर्मादीनां सर्वेषामुपनयनकाले कर्तव्यता

शिखानिधानं कार्यं स्यादित्येवं मनुरब्रवीत् ।
मौञ्ज्यां कृतस्य जातादिकर्मणः करणं स्मृतम् ॥

तस्मिन्नेव दिने तेन कर्मणा तत्समाचरेत् । कर्मणामपि सर्वेषामकृतानां स्वकालके ॥
स्वकालविहितेनैव कर्मणा करणं विधिः । प्रधानकर्मणः पूर्वं गतस्य करणं स्मृतम् ॥

न तु पश्चादिति विधिः नापि पूर्वदिनेऽपि वा ।
गतानि यानि कर्माणि कृत्वा तानि क्रमेण वै ॥

पश्चात्प्राधानिकं कर्म कुर्यादित्येव सा श्रुतिः । समयाचारशास्त्रेण कर्म स्मार्तं तदुच्यते ॥
प्रकृते तस्य यत्प्रोक्तं प्रतिपादकमञ्जसा । सूत्रं तदेव नान्यत्तु तदेतदनुष्ठेयम् ॥
पूर्वैराचरितं कार्यं पूर्वैः पितृपितामहैः । प्रपितामहाद्यैः संयुक्तैस्तैराश्वलायनं(विहितं)तु यत्
तस्याश्रयमेव सुतरां शाखीयं यत्तदाचरेत् । स्वसूत्रोक्तप्रकारेण स्मार्तं कर्म श्रुतीरितम् ॥
तत्र ब्राह्मणकरणे मौञ्जीकर्मोत्तमं स्मृतम् । तस्योपनायनात्प्राक्कानि जातकादीनि तुल्यवत् ॥
कर्तव्यत्वेन चोक्तानि तत्पश्चात्तत्समाचरेत् । जाते पुत्रे जातकर्म विहितं शास्त्रवर्त्मना ॥
तत्क्रियायोग्यतासम्पादनाय स्नानमुच्यते । तत्र स्नानं विशेषेण जातमात्रे विधीयते ॥

सद्यो बहिर्गते कुर्यात्कुर्वन् स्थापनमञ्जसा ।
गायत्र्या प्राणमन्त्रेण चैव कृत्वा तु स्वयम् ॥

त्रिर्वेष्टयित्वा तिसृभिः बन्धयित्वा च पर्वणि । सद्योऽन्तं निपतेदप्सु चोर्ध्वं तत्सलिलं यथा ॥
प्रोद्गच्छेत्सर्वतो दूरं यत्रमन्त्रितेत्तथा । तद्वच्छिन्नेनोदकेन पितरोऽस्य तदुन्मुखाः ॥

अनन्ततृप्ता मुदिता क्षुत्पिपासाविवर्जिताः ।
आनन्दसागरे मग्ना भवेयुर्गलकल्मषाः ॥

तथा स्नात्वा ततः प्राप्य स्नानवर्त्मन परम् । पञ्चद्रव्यं पीठयित्वा भूषणैरन्नभक्षितः ॥
गन्धेन च देवाधिविधिनूतनाभिति चेतसा । इष्ट्वाऽत्र सुपुत्रस्य जातकर्म समाचरेत् ॥
नान्दीश्राद्धविधानेन हिरण्येनाश्मवेदकम् । कर्तव्यमविच्छिन्नेन तु चैवा धर्मपाशिना ॥

कर्मणस्तस्य पूर्वं वा पश्चाद्वा तत्समाचरेत् ।
संकल्पपूर्वकं मन्त्रैः दिवस्पर्यादिभिः शिवैः ॥
अभिमर्शनकर्मादि कृत्वा माधवकर्म च । व्याहृतीभिः प्रकुर्वीत मेधां तेति च मन्त्रतः ॥
त्वयि मेधामिति प्रोक्त्वा नैष्ठर्य्यं कर्म चाचरेत् ।
अथाग्निं च प्रतिष्ठाप्य फलीकरणवस्तुतः ॥
हावयित्वा सर्पपैश्च प्रैषं कुर्याच्च शास्त्रतः ।
ततस्तमग्निं विधिना धारयीतैव तच्छिशोः ॥
रक्षार्थं होममात्रं तत्कुर्यादन्वहमेव वै । प्रथमे दिवसे होमात्परं सत्वरमेव वै ॥
अर्चयेद्ब्राह्मणान् भक्त्या गन्धाक्षतसुमादिभिः ।
ताम्बूलदक्षिणाभिश्च धान्यदानैरनेकशः ॥
वस्त्रैर्गोभिर्धनै रत्नैः शक्त्या लोभविवर्जितः ।
सर्वमङ्गलवाद्यानि कारयीतैव शक्तितः । सुमङ्गल्यर्चनं नित्यं तद्गानैकप्रपूर्वकम् ॥
नीराजनं मन्त्रपूर्वामाशिषश्च क्रमात्स्मृताः । नित्यमेवं प्रकर्तव्यं सत्यां शक्त्यामतत्परः ॥
उत्सवो नास्ति सर्वेषां तस्मादेवं समाचरेत् । पुत्रजन्मनि यद्दत्तं ग्रहणे चन्द्रसूर्ययोः ॥
पित्रोः क्षयाहेऽयनयोः दत्तं भवति चाक्षयम् ।
तस्मात्सवप्रयत्नेन शक्त्या दानानि चाचरेत् ॥
महत्युत्सवे तादृशेऽस्मिन् लोभशाठ्यविवर्जितः ॥

## नामकरणम् अन्नप्राशनम् चूडाकर्म

एकादशे द्वादशे वा नामकर्म च शास्त्रतः । व्यवहाराय नाम्नस्तु पिता कुर्यात्कलत्रवान् ॥
बलवीर्यादिसिद्ध्यर्थं षष्ठेऽन्नप्राशनं चरेत् । भूरपामिति मन्त्रैस्तैः रक्षाबन्धनपूर्वतः ॥
ब्राह्मणान् भोजयेच्चात्र शक्त्या दक्षिणया तथा ।
ततस्त्रैतीयके वर्षे चूडाकर्म विधानतः ॥
कुर्यादङ्कुरपूर्वं वै संकल्पानन्तरं शुचेः । कृत्वा प्रतिष्ठां विधिना कुमारं वर्णिभिः सह ॥

जनन्या भोजयित्वाज्य कृत्वा दिग्वपन शुचे ।
पश्चाद्भागे प्राङ्मुखस्य कृत्वा कर्मगुर तथा ॥
निक्षिपेच्च शिखा मन्त्रैर्वाद्यघोषपुरःसरैः ।
तत स्नात कुमार त मात्रा साकं स्वय शुचि ॥
निकटे स्वस्योपवेशयित्वा कर्म ( कुर्यात् ) तदाह्निकम् ।
पवित्रपाणिरखिलं कुर्याद्ब्राह्मणसाक्षिकम् ॥
तदन्ते भक्षणे दत्त्वा पर शक्त्या द्विजान् तत ।
पूजयित्वा दक्षिणादिभिर्गन्धैर्लोमवर्जित ॥
नीराजनाशीर्वादादि गृहीत्वा ब्राह्मणात्तत ।
भोजयित्वा विधानेन स्वय भुञ्जीत बन्धुभि ॥
एव निर्वर्त्य तदनु वा मौञ्जीमध्येऽपि वा । गर्भाष्टमे ब्राह्मणानां कर्तव्यत्वेन शास्त्रत ॥
चोदितत्वात्कुर्वीत गर्भैकादशवत्सरे । राजन्यानां विशां चेत्तु गर्भद्वादशवत्सरे ॥
मुख्यकाला प्रकथिता गौणकालान् परे जगु ।
ब्रह्मवर्चसकामश्चेत् पञ्चमाब्दे समाचरेत् ॥
नवमो दशमश्चाब्द षष्ठो वत्सर एव च ।
काम्यकाला ब्राह्मणस्य राजन्यस्य तथाष्टम ॥
नवमो दशमश्चापि वत्सरा कामनापरा । वैश्यस्य नवम प्रोक्त दशमस्तदनन्तरम् ॥
सवत्सरा काम्यकाला इति वेदविदो विदु । सुमहानुपपत्तौ चेदाषोडशकवत्सरात् ॥
बाहुज चोपनीतः स्यादाद्वाविंशात्तु भूसुरा । वैश्य चेदाचतुर्विंशादिति वेदानुशासनम् ॥
तदूर्ध्वं पतिता ज्ञेया सर्वकर्मबहिष्कृता ।
जातकादीनि कर्माणि स्वस्वकालाकृतानि चेत् ॥
उपनायैव कार्याणि तदा तेषां प्रधानत ।
विद्यमानाखिला धर्मा समुख्या प्रभवन्ति वै ॥
प्रकृतस्यैव तस्यास्य धर्मा ये शास्त्रचोदिता । तेषामेव प्रधानत्वेनैव स्याद्गणना परा ॥

तेषां तत. पुरोक्तानां जातादीनां तु कर्मणाम् ।
मौञ्जीकाले मन्त्रमात्रक्रिया कार्या न चापरा ॥
ाधङ्कुरप्रतिसरक्षुरादीनां पृथक् पृथक् । करणं शास्त्रविहितं न भवत्येव सर्वथा ॥
तस्मान्मौञ्ज्या कदाचित्तु चूडाकर्मकृतौ तथा ॥

## उपनयनकालकृतानां पृथक् क्षुरकर्माभावः

ान्यादिवत्क्षुरस्यापि न पृथक्करणं मतम् । तन्मात्रस्य पृथक्त्वेन करणे किल केवलम् ॥
ामारमातृभुक्त्यादि प्रसक्तथा प्राकृतं महत् । कर्मोपनयनं सद्यो व्यर्थं नष्टं भवेदतः ॥
उपनीत्या सहैव स्यान्मातृमाणवकक्रिया ।
भुक्त्याख्या वर्णिनां चापि तत्पश्चादखिलक्रिया ॥
मौञ्ज्यास्तस्या इति परं तत्त्वं ज्ञेयं महात्मभिः ।
सर्वं तदोपनयनात्तस्य बालस्य केवलम् ॥
इच्छाभक्षणसञ्चारभापणानीति धर्मतः । विहितान्येव तेषां तु शुचिश्चाशुचिरेव च ॥
तथाविधिर्निषेधो वा पित्रोराशौचमेव यत् । तन्मात्रमेव तच्चापि मातुस्तद्रजसोद्भवम् ॥
यन्मालिन्यं स्तन्यपानजं वा नैषां परं तु तत् ।
अहर्मात्रस्य कृत्स्नस्य रात्रिमात्रस्य वा तथा ॥
निद्रया स्नानसंप्राप्तिः तच्च स्नानं समन्त्रतः ।
उष्णोदकेन कृत्स्नस्य गात्रस्य क्षालनं परम् ॥
सम्यक् सर्वत्र नान्यत्स्यातच्चतुर्थाब्दिकात्परम् ।
तत्पूर्ववन्न भवति ज्ञानाभावे तु केवलम् ॥
ंत्यक्तस्तन्यस्य घटिकामात्रसंवासतस्तथा । स्नानं स्यादेव संत्यक्तस्तन्यपानस्य पूर्ववत् ॥
सर्वमेव भवेन्नूनं परं त्वेकं पुनर्मतम् । तन्मालिन्यं नास्य भवेत्तदोपनयनात्किल ॥
मौञ्ज्याः परं सर्व एव नियमाः सर्ववर्णिनाम् ।
क्षत्रियाणां च वैश्यानां नवमाब्दात्परं पुनः ॥

कामभक्ष कामचार कामवादश्च निन्दिता ।
पितृभ्यां शिक्षिणीयाश्च मौसंदर्शनमात्रत ॥
न सताड्या बाधनीया लालनीयाश्च सन्ततम् ।
भग्नकामा न कार्याश्च प्राप्तकामा प्रतोषिता ॥

पुत्राद्याश्चापि कर्तव्या तत्क्रीडनकदानत । हसन्मुखा प्रकर्तव्या न कार्या प्ररुदन्मुखा ॥

अज्ञानिनो ये पृथुकान् मनोभङ्ग प्रकुर्वते ।
तेषां लक्ष्मीर्यशोभाग्य ओजस्तेजोद्युतिर्मति ॥
क्षणान्निर्मूलता याति क्षय वंश समश्नुते ।
या नारी स्वार्भकं ज्ञानविकल वा स्तनधयम् ॥

पुत्रपौत्रमथान्य वा स्वपोष्यापोष्यपात्रकम् । अभावनष्टसत्कक्ष्यवस्तुसप्रार्थनादिभि ।
रुदन्त देहि मे चेति ताडयन्त पुन पुन । शपन्तं बहुधा मूढ ताडयत्यतिमौढ्यत ॥
सा दुर्भगा नष्टभाग्या नष्टभर्ता विनष्टधी । नष्टश्रीकामधान्यादिसंपत्का तत्क्षणाद्भवेत् ॥
सत्ताडनाविद्धुस्वान्तरुदितश्वनिकल्पित । आब्रह्मलोक व्याप्नोति तच्छ्रुत्वा पितरस्तु वै ॥
स्वताडनावमानातिलाघवारयन्तद्दु खिता । अत्यन्तासह्यदुदु खसहस्रगुणशालिन ॥
शपन्त्येनामियनित्य वन्ध्यानप्रज्ञाथवा । नष्टायुष्या नष्टकामा गतश्रीर्गतमन्दिरा ॥

अलब्धधारणापापा भवेत्येति(वति)महाक्रुधा ।
तस्मात्तु सुतरां बाला न मह्यां यतस्तु ते ॥

ज्ञानशून्या परेषां तत्सुख दुखाविवेकिन । ते भाषया चाटुवाक्यशतकै प्रतिकारकै ॥
सुखश्रोत्रकरैरन्यैस्तोषणीया पदे पदे । तदुद्धरणसञ्चार गतागतविडम्बने ॥

डो(दो)लालोडनतद्गीतितच्चित्ताकर्षणादिभि ।
अत्यन्तोपायशतकै ये कश्चित्प्रीतिवर्धनै ॥
जातदर्पा प्रकर्तव्या न भग्नाशा कदाचन ।
ये तूष्णीं दुर्भगा बालान् ज्ञानहीनान्तुषान्विता ॥
न्यक्कुर्वन्त छद्कुर्वन्त वचोभि श्रुतिदु खदै ।
तिरस्कुर्वन्ति तूष्णीक तिरस्कारस्य तादृश ॥

एतद्दिष्टसुराचार्यपैतृको जायते ध्रुवम् ।
तस्माद्वालान् वरान् स्वीयान् ज्ञानशून्यान् कदाचन ॥
क्रुध्येन्नपि चाक्रोशेत्प्रहरेन्नपि भीषयेत् । तच्चित्ततोषणं ये वै प्रकुर्वन्ति तदा तदा ॥
सर्वे देवमुनिराड्योगिदेवद्विजन्मनाम् । तदनुग्रहपात्रं स्यादन्यथा न भवेत्तथा ॥
बालानां तुष्टये ये वै चिपिटादीन् भलादिभिः ।
तदा तदा प्रदास्यन्ति कृते तेषां सुरेश्वराः ॥
त्रयस्त्रिंशत्कोटिसंख्याः लोकपाला जगद्धिताः ।
वसवोऽष्टौ द्वादशापि सरुद्राः साप्सरोगणाः ॥
पितृभिः सहसुप्रीनाः पूजिताः प्रभवन्त्यति ।
कन्यकाः पूजिताः स्युश्चेत्तत्रापि ज्ञानवर्जिताः ॥
र्षादूर्ध्वं विवाहस्य प्राक्तु किंकिणिकादिभिः । तत्तत्क्रीडनकापात्रैःमृद्दारुपरिकल्पितैः ॥
द्भूषणैर्घैस्तत्सालभञ्जिकापुञ्जपुञ्जकैः । तेषां ततः पुरोक्तानां जातादीनां तु कर्मणाम् ॥
मौञ्जीकाले मन्त्रमात्रक्रिया कार्या न चापरा । नान्द्यङ्कुरप्रतिसरक्षुरादीनां पृथक्पृथक् ॥
करणं शास्त्रविहितं न भवत्येव सर्वथा । तस्मान्मौञ्ज्या कदाचित्तु चूडाकर्मकृतो तथा ॥

## उपनयनकालकृतानां पृथक्क्षुरकर्माभावः

नान्द्यादिवत्क्षुरस्यापि न पृथक्करणं मतम् । तन्मात्रस्य पृथक्त्वेन करणे किल केवलम् ॥
कुमारमातृभुक्त्यादिप्रसक्त्या प्राकृतं महत् । कर्मोपनयनं सद्यो व्यर्थं नष्टं भवेदतः ॥
उपनीत्या सहैव स्यान्मामाणवकक्रिया ।
भुक्त्याख्या वर्णिनां चापि तत्पश्चादखिलक्रिया ॥
मञ्ज्यास्तस्या इति परं तत्त्वं ज्ञेयं महात्मभिः । सर्वं तदोपनयनात्तस्यबालस्य केवलम् ॥
इच्छाभक्षण सञ्चार भाषणानीति धर्मतः । विहितान्येतेषां तु शुचिश्चाशुचिरेव च ॥
तथाविधिर्निषेधो वा पित्रोराशौचमेव यत् । तन्मात्रमेव तच्चापि मातुस्तद्रजसोद्भवम् ॥
यन्मालिन्यं स्तन्यपानजं वा नैषा परं तु तत् ।
अहर्मात्रस्य कृत्स्नस्य रात्रिमात्रस्य वा तथा ॥

निद्रया स्नानसम्प्राप्ति तच्च स्नान समन्त्रव ।
तच्छोदकेन कृत्स्नस्य गात्रस्य क्षालन परम् ॥
सम्यक् सर्वत्र नान्यत्स्यात्तच्चतुर्थादिकात्परम् ।
तत्पूर्ववन्न भवति ज्ञानाभावे तु केवलम् ॥
स्यकालस्यास्य घटिकामात्रमवसानस्तथा । स्नान स्याद्देव सपुत्रस्यान्यपात्रस्य पूर्ववत् ॥
सर्वत्रैव भवेन्नून पर त्वेक पुनर्मतम् । तन्मालिन्य नरस्य भवेत्तद्दोषनयनाकिल ॥
मौञ्ज्या पर सर्व एव नियमास्सर्ववर्णिनाम् ।
क्षत्रियाणां च वैश्यानां नवमाब्दात्पर पुन ॥
कामभक्ष्य कामचार कामवादश्च निन्दिता ।
पितृभ्यां शिक्षणीयाश्च भीतदर्शनमात्रत ॥
न सनाड्या बाधनीया लालनीयाश्च सन्ततम् ।
भग्नकामा न कार्याश्च प्राप्तकामा प्रतोषिता ॥
पुण्याह्वाश्चापि कर्तव्या तत्क्रीडनकदानत ।
हसन्मुखा प्रकर्तव्या न कार्या प्ररुदन्मुखा ॥
अज्ञानिनो ये पृथुकान् स्नो(लग्न)भङ्ग प्रकुर्वते ।
तेषां लक्ष्मीर्यशोभाग्य श्रीमत्तेनो व्युतिर्भवि ॥
क्षणान्निर्मूलतां याति क्षयवश समश्नुते । या नारी स्वर्भक ज्ञानविकल वा स्तन पयम् ॥
पुत्रपौत्रमथान्य वा स्वपोष्यापोष्यपात्रकम् । अभावनष्टलब्ध्यवस्तुसप्रार्थनादिभि ॥
रुदन्ता देहि मे चेति ताडयन्त पुन पुन । शपन्त बहुधा मूढ ताडयत्यतिमौढ्यत ॥
सा दुर्भगा नष्टभाग्या नष्टभर्तातिविनष्टधी । नष्टश्रीकामधान्यादिसम्पत्का तत्क्षणाद्भवेत् ॥
तत्ताडनादिदु ख्यार्तहृदिनध्वनिरुत्थित ।
आब्रह्मलोक व्याप्नोति तच्छ्रुत्वा पितरस्तु ते ॥
स्वताडनावमानातिलाघवात्यन्तदु खिता । अत्यन्तासह्यतद्दु खसहस्रगुणशालिन ॥
शपन्त्येनामिय नित्य वन्ध्या नष्टप्रजायता । नष्टायुष्या नष्टकामा गतश्रीर्गतमन्दिरा ॥

अलब्धाशरणापापा भवेत्येति (वत्वि) महाक्रुधाः।
तस्मात्तु सुतरां वालाः न प्रहार्या यतस्तु ते ॥
ानशून्याः परेषां तत्सुखदुःखा विवेकिनः। ते भाषया चाटुवाक्यशतकैः प्रीतिकारकैः॥
ुखश्रोत्रकरै रम्यैस्तोषणीयाः पदे पदे। तदुद्धरणसञ्चार गतागतविडम्बनैः॥
डोलालोडनतद्गीतितच्चित्ताकर्षणादिभिः।
अत्यन्तोपायशतकैः यैः कश्चित्प्रीतिवर्धनैः॥
जातहर्षाः प्रकर्तव्याः न भग्नाशाः कदाचन।
ये तूष्णीं दुर्भगा वालान् ज्ञानहीनान्तुपान्विताः॥
न्यक्कुर्वन्तः छत्कुर्वन्तो वचोभिः श्रुतिदुःखदैः।
तिरस्कुर्वन्ति तूष्णीकं तिरस्कारस्य तादृशः॥
एतद्दिष्टसुराचार्यपैतृको जायते ध्रुवम्।
तस्माद्वालान् वरान् स्वीयान् ज्ञानशून्यान् कदाचन॥
न क्रुध्येन्नापि चाक्रोशेत्प्रहरेन्नापि भीषयेत्। तच्चित्ततोषणं ये वै प्रकुर्वन्ति तदा तदा॥
ते सर्वे देवमुनिराड्योगिदेवद्विजन्मनाम्। तदनुग्रहपात्रं स्यादन्यथा न भवेत्तथा॥
वालानां तुष्टये ये वै चिपिटादीन् फलादिभिः।
तदा तदा प्रदास्यन्ति कृते तेषां सुरेश्वराः॥
त्रयस्त्रिंशत्कोटिसंख्याः लोकपाला जगद्धिताः।
वसवोऽष्टौ द्वादशापि सरुद्राः साप्सरोगणाः॥
पितृभिः सहः सुप्रीताः पूजिताः प्रभवन्त्यति।
कन्यका पूजिताः स्युश्चेत्तत्रापि ज्ञानवर्जिताः॥
वर्षादूर्ध्वं विवाहस्य प्राक्तु किंकिणिकादिभिः। तत्तत्क्रीडनकापात्रै मृद्दारुपरिकल्पितैः॥
तद्भूषणौवैस्तत्सालभञ्जिकापुञ्जगुञ्जकैः। श्रीर्धीर्लक्ष्मीर्महागौरी वाणी चैन्द्री दया रमा॥
क्षमा शान्तिश्च पुष्टिश्च देवपत्न्योऽखिलास्तथा।
मंगलानि च सर्वाणि ह्रदास्तीर्थानि च द्रुमाः॥

सरित सागरा सप्त लोकाश्चै पर्वतास्तथा । ऋषयश्च सपत्नीका सर्वे दीर्घायुषस्तथा ॥
पूजिता परिपूर्णार्था कृतार्थाश्च पदे पदे ।
पुत्रपौत्रानुवृद्धाश्च स्यु सत्यमेतन्मयोदितम् ॥
कन्यकादानतश्च सर्वेऽप्यनुमृत्य सुवरा यत्र । निवसन्त्येव तस्मात्तु भौणयेन्निद्दर्षयेत् ॥
वाम्बातेऽतिदुष्णश्च प्रोक्ता ग्न क्षणेन वै । प्रासमिव प्रकुर्वन्ति नत्त्रीभाग्यरत्तमम् ॥
दाघायुष सुभगत्व नित्यारोग्यसुपुष्टिकम् । तस्मात्तु कन्यकादान सर्वदानोत्तमोत्तमम् ॥
महादानसहस्रेण तुलित तनुनर्मया । निरूप्यते विविधैव महादाननिरूपणे ॥

## उपनीतधर्मा ओमित्येकाक्षरमित्यादिमन्त्रस्वरूपम्

उपनीतस्तु पित्रा यो द्विजोऽकनिषमस्सदा । न भवेदेव तस्मात्तु द्विपत्व प्रासवान् यत ॥
कृतकालत्रयमहामन्त्रसन्ध्यो महाशुचि । कृताग्निकार्य सुमना दण्डाजिनधरो भवेत् ॥
सन्ध्यामन्त्राश्च ये ते स्युरापोहिष्ठादिका पुरा ।
मया निरूपिता सर्वे गायत्रीप्रमुखा शिवा ॥
तद्यस्तक्रियमश्चापि वटुत्वस्यकर्म च । अतोऽत्र सर्वं तद्भूयो न वाच्य हि तत परम् ॥
यत्तदेव प्रकृत्य शिष्ट मन्त्रगणाह्निकम् ।
ओमित्येकाक्षरादि स्यात् सप्तत्रिंशात्मको मनु ॥
आद्यपादे त्वष्टवर्णा द्वितीये दशवर्णका । तृतीये द्वादशार्णा स्यु तुरीये सप्तवर्णक ॥
ओंकारब्रह्मणारैक्यप्रतिपादनहेतवे । मन्त्रोऽयं प्रथम श्रीमत् जयादौ विनियोजित ॥
तद्ब्रह्मणा दनिर्वाच्यगायत्र्यागमसिद्धये । द्वितीयमन्त्र कथित आयात्विति तत परम् ॥
द्वात्रिंशद्वर्णगणकस्तुर्यपादे तु तस्य वै । सवयोर्भेदतो ह्यय सप्तमार्णस्य तादृश ॥
गायत्रीमिति य शब्द तृतीयान्तश्च केवल ।
प्रथमार्थे विनिर्दिष्ट गायत्री तादृशी शिवा ॥
मे ब्रह्मेद जुषस्वेति जुषतामिति चार्थक । यद्ब्रह्मादिति मन्त्रोऽय तादृग्ध्यानफलार्थक ॥
द्वात्रिंशद्वर्णघटित सर्वपापपनोदक । सप्तवर्णेति मन्त्रोऽय सर्वेषा तदनन्तरम् ॥

संस्थितानामोजोऽसीति ह्यनुषङ्ग इति स्मृतः। सप्तानामपि मन्त्राणां यजुषां पूर्वतोऽपि वा॥
परतो वानुषङ्गः स्यात् सोऽयं मास्त्वस्तु वा पुनः।
विकल्पानामत्र पुनः समः प्राधान्यतो मतः॥
अतो यस्य यथेच्छं वै तदङ्गीकरणं भवेत्। अभिभूरों महामन्त्रः सर्वाकर्षणमुक्षमः॥
गायत्रीमुखदेवीनां छन्दर्षीणां च सश्रियाम्।
एभिश्च पञ्चभिर्मन्त्रैः स्वात्मन्यावाहनं चरेत्॥
गायत्रीमावाहयामीत्यादिकैः पञ्चभिः शिवैः। महात्मनो ब्राह्मणस्य सर्वदेवस्वरूपता॥
अभिवृद्धिस्तेजसः स्यात्प्रतिनित्यं त्रिवारतः। छन्दर्षिदेवतानां च तथाङ्गानां च बोधकाः॥
यजुर्विशोपागायत्राः शिखान्ताः सप्त कीर्तिताः।
अथ पत्रात्पृथिव्योनिः प्राणापानादिकं यजुः॥
विनियोगान्तकं त्वेकं गायत्री रूपबोधनात्।
आरभ्य तस्या देव्या वै गायत्र्या स्वीकृतौ मतम्॥
समीपवाचकः सोऽयमुपशब्दः प्रकीर्तितः। नयनं स्यादानयनं आकर्षणमिति स्मृतम्॥

## गायत्रीस्वरूपम्

ओं भूर्भुवस्सुवश्चेति प्रथमं शीर्षमुच्यते। ओमित्येतद्द्वितीयं स्याच्छीर्षं तस्यास्ततः पुनः॥
तत्सेति तु तृतीयं च शीर्षं वेदमयं परम्। यजुर्वेदं भर्ग इति पादस्तुर्यमिहोच्यते॥
धियो योनः पञ्चमं स्याच्छीर्षकं सामरूपकम्।
त्रिपात्त्वं स्पष्टमेव स्यात्तत्स भर्गो धियादिकैः॥
तत्सवितुर्हि प्रथमा कुक्षिर्वेदाश्रया शिवा।
वरेण्यं तु द्वितीया स्यात्कुक्षिः शास्त्रमयोऽपि वा॥
भर्गो देवस्य शक्त्याख्या तृतीया तु प्रकीर्तिता।
धीमहीति तुरीया स्यात्कुक्षीर्लोकमयी तथा॥
धियो योनस्सुरमयी कुक्षिः सा पञ्चमी परा। प्रचोदयाद् ब्रह्ममयी षष्ठी सा सर्वरूपिणी॥

अत्र य सप्तमो वर्ण स तु वर्णद्वयात्मक । यकारश्च यकारश्च द्वावित्येव मनीषिभि ॥
शाखा तु वैदिके सर्वे ज्ञेयो वेदे यथैव सा । गायत्री सर्ववेदानां जननी ब्रह्मनामिका॥
शिष्टा मन्त्रा यथास्थ्च पूर्वमेव निरूपिता । अस्य मन्त्रस्य महतो देवता सवितुस्तत

## प्रातरुपस्थानमन्त्राः

अथान्ते सदुपस्थानं यजुर्भिस्तत्समाचरेत् । अग्रमूर्ध्वेव गायत्री प्रमुखैर्वेदमध्यगै ॥
मित्रस्येति त्रिभिर्दिव्यैः प्रातःकालेषु सन्ततम् ।
प्रथमं तत्र मित्रस्य पश्चान्मित्रो जनानिति ॥
प्रसमित्रेति पश्चात्तु तत्कमो वेदमध्यग । शास्तिनां निरिशानां च मित्रस्येति त्रय तदा॥
यजुर्वेदोक्तरीत्यैव वक्तव्य नान्यमार्गत । एवमग्निश्च सूर्यश्च जलप्राशनचोदितौ ॥
आप पुनन्तु च तथा ओमित्येकाक्षर तथा । दशप्रणवगायत्री प्राणायामाख्यकर्मणि॥
या चोदिता पुरा सापि आयातु वरदा तथा ।
यदह्नादिति मन्त्रश्च सर्ववर्णादिक तथा ॥
अभिभूरो पञ्चक च तथा गायत्रिया तत । प्राणापानेत्यादिक च उत्तमे शिखरे तत ॥
आवाहिताया गायत्र्या स्वस्मिन्नेव विधानत ।
यथेच्छाप्रेपणे तस्या उपस्थानमुखेन वै ॥
विनियुक्तो वेदविद्भिस्तदेतच्च तथापरम् । स्तुतो मयेति चरम यजुष्येव हवोऽखिले ॥
नान्यत्र यत्र कुत्रापि तथा तस्माद्वेदसदा । अभिवादनकालेषु सतत प्रवर शिवम्॥
द्दो (त्र) प्रवरमार्गेण प्रवदेन्नान्यवर्त्मना । आभ्यर्यवप्रवरतो ह्यभिवादनकादिषु ॥
यदि क्रियाविशेषेषु कृत चेन्नाशमाप्नुयात् ॥

## मार्जनमन्त्रसख्या

तथा सन्ध्यात्रये नित्य चतुर्विंशतिमार्जने । आपोहिष्ठेति नवक वारद्वयकृत यत ॥
मन्त्रा अष्टादश स्युर्हि तदा ते याजुषा परा । मन्त्रा जातानवेतस्ते वक्तव्यास्तद्द्वय परम्॥

दधिक्राव्णेति परमं यथारुचि तु चोदितम् । तथा हिरण्यवर्णाश्च चत्वारो मनवोऽपि वै ॥
यथारुचि परं तेषां षण्णामपि हि पाठने । पठने चापि नियमः तेषु कर्मसु वच्मि वः ॥
याजुषाणां ऋक्प्रकारकरणं त्वत्र निन्दितम् । बह्वृचानां तथा चोभयं बाधकाय न ॥
तथा किमर्थमित्युक्ते सान्ध्यं कर्माखिलं महत् ।
यजुर्वेदान्तर्गतं स्यान्न तदन्यत्र कुत्रचित् ॥
तस्मादशेषविप्राणां यजुर्मन्त्रविधानतः । सान्ध्यस्य करणे प्रोक्तं कर्मणो नेति बाधकम् ॥
यदि शुद्धयजूंष्यत्र सान्ध्ये कर्मणि मोहतः । शाखान्तरप्रकारेण तानि प्रोच्चरितानि चेत् ॥
भवेत्तु कर्मवैकल्यं विशयो नात्र वच्मि वः ।
त एते खलु षण्मन्त्राः ऋचः स्युश्च यजूंष्यपि ॥
वेदद्वयेऽपि चोक्तत्वात्स्वरभेदादिना तथा ।
महामन्त्रस्य तस्यास्या गात्र्याख्यस्य चेत्पुनः ॥
तत्तच्छाखोक्तरीत्यैव जपादिक उदाहृतः ॥

## माध्यांह्निकार्घ्यम्

माध्याह्निकक्रियायां तु गायत्रीं सकृदेव हि । अर्घ्यमेकं समुच्चार्य देयं स्यात्तदनन्तरम् ॥
सौर्यास्त्रेण द्वितीयं तं हंसश्शुचिषदित्यृचा । तत्तच्छाखोक्तरीत्यैव तं मन्त्रं समुदीरयेत् ॥
तच्चक्षुरिति सर्वेषां समुच्चारणकर्मणि । यजुर्वेदविधानेन प्रोक्तिस्साभिहिता परा ॥
पश्चाच्च उदमन्त्रोऽति यजुरेव हि केवलम् । तदुपस्थानकृत्येऽस्मि(न्) बह्वृचानां विशेषतः

## बह्वृचानां मन्त्रोच्चारणप्रकारः

उदुत्यवर्गो वक्तव्यः नित्योऽयं नान्यथा मतः । याजुषाणामत्र परं आसत्येनेत्यृगात्मकः
मनुः स्याद्याजुषः पश्चादुद्वयं तमसस्परि । उदुत्यं च ततो भूयो मनुस्तदनुतादृशः ॥
चित्रं देवानामित्येकश्चत्वारः खलु तेऽखिलाः ।
सोऽयं चेत्तदुपस्थाने इमं मे वरुणो मनुः ॥

तस्या यामि तत पश्चात् यच्छिद्रीति पुन पर ।
यदिकं चेद मनुर्मूय कितवास तत पर ॥
मध्यम ता (?) मध्यगता पातकशात्रव ।
विनिर्मुक्ता विरोपशे प्रधानश्च स्मृतस्तोऽखिले ॥
तस्मिन् कर्मणि सायाह्ने दिगादीनां तत पुन ॥

## दिङ्नमस्कारः

तत्रत्यानामशेषाणां नमस्कारक्रियापर । नमोऽस्त्वाक सुमहान् वक्तव्य कर्मसिद्धये ।
दिग्लिङ्गातत्र सहयाता नमो गगादिकैरपि ।
वर्जयेदि दरासलयाकादि स्यु सर्वेऽत्र पावका ॥
तदेवमखिल प्रोक्त साध्य कर्मत्रयं महत् । एव कृतोपनयनो द्विजमात्रोऽन्वह सदाम् ।
कुर्यात्तु सन्ध्यां नियतो न चेद्विप्रो भवेदयम् ।
सन्ध्यामूलमिदं सर्वं ब्राह्मण्य सर्वदेहिनाम् ॥
वन्दनीय प्रार्थनीय पूजनीय प्रयत्नत । सेव्य च दर्शनीय च सन्ध्ययैतत्तु सपर ॥
ब्राह्मणस्य महत्त्व तदीयतीति (?) न कैरपि ।
सुरेन्द्रै सर्वदेवैस्ता(र्वा) ब्रह्मविष्णुशिवादिभि ॥
सुरोत्तमैर्महद्भिर्वा परिच्छेत्तु हि शक्यते ।
ब्राह्मण्य खलु देवाना मप्यत्यन्त हि दुर्लभम् ॥
ब्राह्मणे सर्ववेदाश्च ब्राह्मणे सर्वदेवता । ब्राह्मणे सर्वतीर्थानि तस्मादे दक्षिणे शिवे ॥
सर्वे समुद्रा सरित सदा कूपा सरासि च ।
पुष्करिण्य पुष्कराद्या सर्वे यागास्तपांसि च ॥
विविधान्यपि कृच्छ्राणि व्रतानि विविधान्यपि ।
गावो द्रुमाश्च नियमा दीक्षा यागा सद्क्रिया ॥
शास्त्राणि च पुराणानि स्मृतयो विविधा परा ।
आदित्या वसवो रुद्रा लोकपाला महोत्तम ॥

पतिव्रतानां प्रवराः कामधेन्वादिकाः शिवाः ।
चिन्तामणिमहाव्रातः कल्पवृक्षा धराधराः ॥

सप्तर्षयो महात्मानः विप्रमात्रेऽनिशं पुनः । स्वभागधेयकार्याय वसन्ति किल सन्ततम् ॥

न ब्राह्मण्यात्परं वस्तु समं वा यत्रकुत्रचित् । भुवनेष्वस्ति सर्वेषु कलौ केचन पामराः ॥

ब्राह्मण्यादधिकत्वेन शैवं वैष्णवमेव च । गाणपत्यं च शाक्तं च तत्तदेकं पुनश्च हा ॥

वदन्तस्तेन नाम्ना च वयं युक्ताः सुभूषिताः ।
तन्नामधेयमस्माकं ब्राह्मया साधारणं यथा ॥

अधिकं सोमयाजित्वं वाजपेयत्वमेव वा । तत्पौण्डरीकयाजित्वं तथेदमपि चैककम् ॥

शैवादिकमिति प्रोचुर्ब्राह्मया व्याप्यत्वमुज्वलम् ।
सदेतदत्यन्तमहामोहगाढविजृम्भितम् ॥
तद्व्याप्य धर्मो न भवेद् ब्राह्मण्यस्य कदाचन ।
अत्यन्तव्यभिचरितं शिवत्वादिकमल्पकम् ॥

तत्तु दर्शादियाजित्वं द्विजमात्रगतं यतः । तदसाधारणो धर्मः तच्छिवत्वाधिकं तथा ॥

सर्वथा न भवेदेव तस्माद् ब्राह्मण्यमेककम् ।
सर्वोत्तममिति प्रोक्तं आतीक्षिष्टेति सा श्रुतिः ॥

अयं ब्राह्मण्य इत्येव प्रोवाच किल तादृशी । यावतीरिति तद्वाक्यं ब्राह्मणेनैव सन्ति हि

ब्राह्मणेभ्यो वेदविद्भ्यो नमस्कुर्योदिति स्म च ।
उदाहृत्य जगादैव तस्मात्तु ब्राह्मणोऽधिकः ॥

नित्यं ब्राह्मणशब्दोऽयं ब्राह्मणानां सुभूषणम् । शब्दान्तरं तु सततं शैवादि खलु तत्परम्

प्रभवेद्दूषणायैव नात्र कार्या विचारणा । एवं सत्यत्र केचित्तु कलिधर्मेण केवलम् ॥

दूषणं भूषणत्वेन स्वीकृत्य प्रत्युतावहा । तेनदूषणशब्देन भूषितान् दूषयन्त्यहो ॥

एतत्किमिति चोक्ते तु कलिधर्मस्तु तादृशः ।
कलौ नीचा महान्तः स्युः महान्तो नैच्यभागिनः ॥

प्रायेण भूतले शिष्याः वहवो गुरुदूषकाः । गुरुभक्ता अतिस्वल्पाः पुत्रा जनकदूषकाः ॥

भर्तृवैरा स्त्रियः सर्वाः प्रायेण जगतीतले ।
पतिव्रता अतिस्वल्पा ना न सन्तीति नास्त्यपि ॥
सत्येन तत्रतत्रापि साध्या भर्तृपरापरा । धरणी चापि निर्वीर्या निरौषधरसान्तराम् ॥
पापलोकैरुसंकीर्ण सदा सज्जनदुर्लभा । तुच्छदैवगणारण्यमहादेवातिदुस्तरा ॥
शनैः शनैरल्पितश्री वेदमार्गाङ्कुशाग्र(नि)त् ।
भापारचित्तशास्त्रौघा महाशास्त्रातिदुर्लभा ॥
नष्टनष्टं हमशानभूपाद्भूतिमज्जना । क्ष रन्तार्थपरा भूपा दयादाक्षिण्यदूरिता ॥
तादृशेऽत्र कलौ किं किं नभवद्दनिनिन्दितम् ।
सर्वं निन्दितमेव स्यात्परार्त्तं यदनिन्दितम् ॥
प्राधान्यमनृतस्यैवाप्राधान्य सत्यस्य परम् । सत्यस्य तु भवेत्र यथापि विजोऽनिशम् ॥
सत्यस्यैव भवेन्नून नानृतस्य कदाचन । सत्यस्यानृतवद्भान तुच्छजल्पनकथने ॥
पश्चाद्विधिरेणसत्यस्याधान च प्रभवत्यपि । अस्मिन्नर्थे प्रवक्ष्यामि पुन पुनरवीव च ॥
चोरश्चोरो भवद्द्वेष सबैव च मृपामृषा । पापं पापं भवेन्नूनम् सत्यंसत्यं न चानृतम् ॥
धर्मस्य विजयो नित्य नाधर्मस्य कदाचन । पर त्विश्वमधर्मस्य तत्वभाना कलौ सव ॥
कालेन यस्माद्भूयश्चात्वैनैव नथान्यथा । तत्क्षणप्रतिसंहार न्यायधर्मसतां तथा ॥
सत्यस्य च भवेदस्मादभ्युत्थान यथा पुरा । कदाचिदनृतं सत्यं भविष्यत्यपि केवलम् ॥
तत्सत्यमनृतं तस्य विलय प्रापयिष्यति । अतस्त्वन्यायमतिद्रोहमति क्रौर्यं कदाचन ॥
अन्यद्य भाव्यशास्त्र न कुर्यान्न च कारयेत् । कुर्वन्ती सर्वपापानि वर्णानां तक्रमेण वै ॥

वर्णानामाश्रमाणामुत्तरोत्तरं प्रायश्चित्तद्वैगुण्यम् संन्यासभेदाः

प्रायश्चित्त द्विगुणन सूतकं च तथा मतम् । यद्ब्राह्मणस्यैकगुणं तद्राजन्यस्य धर्मत ॥
द्विगुण शास्त्रगदित वैश्यस्य त्रिगुणं स्मृतम् । चतुर्गुणं तस्य तत शूद्रस्येति मनीषिभि ॥
कथित शास्त्रतत्त्वज्ञै तदेव गृहिणो मतम् । यत्तस्य द्विगुण कृत्स्न धर्मतो ब्रह्मचारिण ॥
वर्णन त्रि,त्रि गुणप्रोक्तं यतेस्तस्य चतुर्गुणम् ।
कुटीचक स्यात्प्रथम द्वितीयन्तु बहूदक ॥

हंसस्तृतीयइत्युक्तः चतुर्थस्तु तथापरः । यतिः परमहंसाख्यः कुटीचकबहूदकौ ॥
ऋत्वीर्युक्तगायत्रीजापकौ शिखिनौ तथा । एकोपवीतिनौ स्यातां दण्डत्रयसमन्वितौ ॥
भिक्षान्नप्राशनौ नित्यं ब्रह्मचिन्तापरायणौ । त्यक्तपुत्रकलत्रादिजनौ वैराग्यभागिनौ ॥
एतद्भिन्नौ तावप्यन्यौ एकदण्डौ गताश्रयौ । त्यक्तोपवीतिनौ त्यक्तगायत्रकौ गिराश्रयौ ॥
मन्त्रत्यक्तशिखौ सम्यक् जितरोषौ सपुण्ड्रकौ । गृहीतप्रणवौ सन्तौ ब्रह्मनिर्वाणमृच्छतः
चतुर्विधानमेतेषां वैकल्ये किल कर्मसु । प्रायश्चित्तं तारतम्यात्प्राणायामविशेषतः ॥
नान्येन येन केनापि तस्मात्तेषां जपं विना । प्रणवस्योच्चारणाया वर्तते जगतीतले ।

होमो दानं तपः कर्तुं नाधिकारोयतःस्मृतः ।

चित्तं दानादिभिः कृच्छ्रैः ब्रह्मचर्यादिकस्य चेत् ॥

आश्रमत्रितयस्याप्यधिकारः शास्त्रसंमतः । संप्राप्तानां तु चित्तानां करणाय महात्मभिः ॥

मुख्यात्कृच्छ्रमुखेनैव सरणिः सा निरूपिता ।

तानि कृच्छ्राणि साक्षाद्धं प्राजापत्यादिकानि हि ॥

कर्तुं न सत्वरं सर्वैः साक्षादीशमुखैरपि । न शक्यते हि सुतरां किंतु तानिप्रवच्मि वः ॥

## प्रायश्चित्तप्रतिनिधिः

प्रत्यम्नायमुखेनैव न चेत्प्रतिनिधित्वतः । करणं सर्वदा प्रोक्तं ते स्युर्बहुविधाः पराः ॥

विधितः प्रतिनिधयः सम्यग्ब्राह्मणभोजनम् ।

गोदानं वा नदीस्नानं गोमूल्यं वा तथा परम् ॥

निष्कदानं च गायत्री दशसाहस्रसंख्यया । जपो वा संहितामात्रपारायणमथापि वा ॥
शिष्टान्नभोजनं चापि समान्याहुर्मनीषिणः । सप्तगङ्गावगाहश्चेदष्टकृच्छ्रफलप्रदः ॥
यत्रकुत्रापि वैकत्र तासुनित्यं न संशयः । पारावारस्नानमेकं कृच्छ्रद्वादशदायकम् ॥
चापाग्रस्नानमेकं चेदब्दकृच्छ्रफलप्रदम् । भागीरथीमहास्नानं सर्वपापापनोदकम् ॥
अष्टोत्तरप्राजापत्यशतकृच्छ्रफलप्रदम् । गंगासागरसंगस्य स्नानमेकं तु तत्परम् ॥
अष्टोत्तरसहस्राणां कृच्छ्राणां फलदायकम् । तदेतज्जाह्नवीसिन्धुसङ्गस्नानं विशेषतः ॥

## यतीनां प्रायश्चित्तानधिकारः

यत्यशक्यं हि सततं कृच्छ्रप्रतिनिधित्वतः । उक्तानामपि सर्वेषां भिक्षूणां त्यक्तसङ्गिनाम् ॥
गोदानप्रमुखानां च करणं त्वर्थमूलतः । न युज्यते हि सततं धातूनां तु परिग्रहम् ॥

यतो भ्रष्टः प्रपतति मस्करी नात्र संशयः ।
तस्माद्यतेस्तु चित्तं सम् तारतम्यं विना न किम् ॥

कृच्छ्राणां समनुष्ठानं त्यक्तसङ्गस्य तस्य वै । विधायकादिवरणं शास्त्रहोमादिकर्म च ॥
प्रदानं दक्षिणायाश्च सम्यगनुष्ठानमेव च । प्रत्यङ्गगोदानाख्यं च निन्दितं तद्यतेरिति ।

तस्मात्परिव्राट् मोहेन पापभाक् चेत्ततस्स तु ।
आरूढपतितो ज्ञेयः चित्तं तस्य न विद्यते ॥

वर्णाश्रमिणां चेत्तु धनग्रहणयोग्यता । अस्ति यन्मानवो नूनं प्रायश्चित्तस्य कारणात् ॥

नित्याधिकारिणः प्रोक्ताः करणात्तस्य केवलम् ।
अल्पायासेन ते सम्यक् तरन्त्येव त्रयश्च वै ॥

वर्णी गृही वनी नित्यं तत्रापि प्रवरो गृही । सर्वस्य चित्तमात्रस्य नितरां धनमूलतः ॥

कर्मण्यत्वात् तत्रास्मिन् प्रवरो हि गृही धनी ।
तस्माद्गृहाश्रमः सम्यक् मर्त्यानां प्रवरः परम् ॥

यस्मिन्स्थितस्तु तरति निर्धूयाखिलकिल्बिषम् । धनदानमुखनैश्च तत्रायं प्रवरो यतः ॥
अधिकारी महाभागः गृहस्थः शास्त्रसम्मतः । गार्हस्थ्यमेकं शिष्टानां शरणं कारकं परम् ॥
आश्रयः सर्वधर्माणां स्थितस्तत्र कृती भवेत् । प्रत्यक्षकृच्छ्रकरणसामर्थ्यं चित्तहेतवे ॥

न कस्यापि कदाचित्स्यात् किन्तु तेषां क्षणतः वै ।
कर्तुं प्रतिनिधित्वेन शक्यतेऽर्थस्य दानतः ॥

### दानप्रशंसा

तस्मिन् दानेऽधिकारी स्याद् गृहस्थो धर्मतः स्मृतः ।
अखिला कृच्छ्रचर्याश्च व्रतचर्याश्च केवला ॥

दीक्षाचर्या यज्ञचर्याः सर्वचर्या क्षणान्नृणाम् । दानतः संभवन्त्येव तस्माद्दानपरो गृही ॥
तस्मादेव विशेषेण तत्तु कामो विचक्षणः । दानं परं प्रशंसन्ति दानमेव परायणम् ॥

दानं बन्धुर्मनुष्याणां दानं कोशो ह्यनुत्तमः ।
दानं कामफला वृक्षाः दानं चिन्तामणिर्नृणाम् ॥

दानं पुत्रः परं द्रव्यं दानं मातापिता तथा । न दानेन विनाकिञ्चित्प्रार्थितं भलमाप्यते ॥
न दानशीलिनामापत्तस्माद्दानं समाश्रयेत् । हारनूपुरकेयूरपूरितोत्तममन्दिरम् ॥
लावण्यगुणसंपत्तिर्दानादेव हि लभ्यते । दानेन प्राप्यते स्वर्गश्रीर्दानेन हि लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति । दानेन लभ्यते विद्या दानेन युवतीजनः ॥
दानेन मोदते स्वर्गे स्वकैः सह चिरं नरः । धर्मार्थकाममोक्षाणां साधनं परमंस्मृतम् ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुः दानमेव कलौ युगे ॥
युगेषु निखिलेष्वेषु दानं साधारणान्मतम् । उत्तमत्वेत विबुधैः तस्माद्दानपरो भवेत् ॥
दानादृते नोपकाकारः दृश्यते धनिनः परः । दीयमानं हि तत्तस्य भूय एवाभिवर्धते ॥

यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने ।
तद्वित्तं स्वमहं मन्ये शेषं कस्याभिरक्षति ॥

यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दानैरपि धनैरपि ॥
किमेतस्य प्रभवति तावतातस्तदुत्सृजेत् । पात्रभूतेषु विप्रेषु देशेकाले च सन्ततम् ॥
दानेन भोगी भवतिमेधावी वृद्धसेवया । अहिंसया च दीर्घायुरिति प्राहुर्महर्षयः ॥
पापकर्मसमायुक्तं पतनं नरके नरम् । त्रायते दानमेवैकं पात्रभूते द्विजे कृतम् ॥
उक्तदोषगुणोपेतमुक्तदोषविवर्जितम् । कामधुग्धेनुवद्दानं फलत्यात्सोप्सितं फलम् ॥
न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् । सत्पात्रे प्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥

यस्य चित्तं न दानाय नोपभोगाय कल्प्यते ।
नापि कीर्त्यै न धर्माय तस्य वित्तं निरर्थकम् ॥
तस्माद्वित्तानि संपाद्य दद्याद्विप्राय भक्तितः ।
न्यायमार्गेण विबुधः कदाप्यन्यायवर्त्मना ॥

देवालयं नो विदधाति वा कुण्डं तटाकं न करोति रूपम् ।
पुण्यं विवाहं स्वजनोपकारं तथा प्रपां वा द्विजमन्दिरं वा ॥
धनं सदा भूमिगतं प्रकुर्यात् यदृच्छया लब्धमनन्यचित्तः ।
स्वयं न भुञ्जीत तथाविधं चेत्परोपकाराय भवेत्तु तद्धि ॥

अहन्यहनि याचन्तमहं मन्ये गुरुं यथा। अदत्त्वाहं दरिद्रोऽस्मि त्वं दत्त्वा भूर्धनो महान्
मार्जनं दर्पणस्यैव य करोति दिने दिने। दानप्रबोधकस्तस्मादरिद्रोऽयं नृणां सदा
किं धनेन करिष्यन्ति देहिनो भंगुराश्रयाः । यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम्
ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न दीयते । इच्छानुरूपो विभवः कदा कस्य भविष्यति
अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति । दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति
अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा । तदिदं देहि देहीति विपरीतमुपस्थितम्
बोधयन्ते न याचन्ते देहीति कृपणा जनाः । यैर्नभुक्तं न च हुतं तीर्थे न ( ? )
( ? ) मरणं कृतम् । हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम्
दीना विवसना रूक्षा कपालाङ्कितपाणयः । दृश्यन्ते किल सर्वत्र ते वै पूर्वं जनैः किल

सदाचाराः कुलीनाश्च रूपवन्तः प्रियंवदाः ।
बहुश्रुताश्च धर्मज्ञा दातारः स्युः श्रियान्विताः ॥
अलब्धमुष्टिमात्रश्च याचमाना परान्नतिः ।
दृश्यन्ते दुःखिनः सर्वे प्राणिनः सर्वदा भुवि ॥
अदत्तधा न जायन्ते परभाग्योपजीविनः ।
मा ददास्वेति यो ब्रूयाद् गव्यग्नौ ब्राह्मणेषु च ॥

तिर्यग्योनिशतं गत्वा चाण्डालेष्वभिजायते । एकेन तिष्ठताधस्तात् अन्येनोपरितिष्ठता
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः । प्राप्तानामनुरूपाणां पात्राणां दानकर्मणः
देशे कृत्स्नेपि काले वा नादेयं ह्यस्ति किंचन । उच्चैश्रवसमश्वं प्रापणीयं सतां विदुः
अनुनीय यथाकामं सत्यसन्धो महाजनः । स्वैः प्राणैः ब्राह्मणः प्राणान् परित्राय दिवंगतः
रन्तिदेवश्च साकृत्यो वसिष्ठाय महात्मने । अथ प्रदाय शीतोष्णा नाकपृष्ठमितिगतः

आत्रेयः खण्डवमयोरर्हतो द्विविधं धनम्।
दत्वा लोकान्ययौ धीमान् अनन्तास्स महीपतिः ॥
वेकाशी नरोऽङ्गानि पुत्रं च प्रियमौरसम्। ब्राह्मणार्थं (......?) नाकपृष्ठमुपागतः ॥
र्दनः काशिपतिः प्रदाय नयने स्वके। ब्राह्मणायातुलां कीर्तिं इह चामुत्र चाश्नुते ॥
र्मृग्रशलाकं तु सौवर्णं परमृद्धिमत्। छत्रं स्वर्णमयं दत्वा सराष्ट्रोऽप्यव(प)तद्दिवम् ॥
ःतिश्च तथात्रेयः शिष्ये ( ...? ) र्गुणम्। उपदिश्य महातेजाः गतो लोकाननुत्तमान् ॥
म्बरीषोङ्गदे दत्वा ब्राह्मणेभ्यः प्रतापवान्। अर्बुदानि शतैकं च सराष्ट्रोऽभ्यपतद्दिवम्
ावित्रः कुण्डले दिव्ये शरीरं जनमेजयः। ब्रह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ॥
र्वरत्नं वृषादर्भिः यवनाश्वः प्रियां स्त्रियम्। रम्यमावसथं चैव दत्वा स्वर्लोकमाश्रितः ॥
निमिराष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम्।
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपट्टणाम् ॥
ाजामित्रसहश्चैव वसिष्ठाय महात्मने। मदयन्तीं प्रियां दत्वा तया सह दिवंगतः ॥
सहस्रजिच्च राजर्षिः प्राणानिष्टान् महायशाः।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥
सर्वकामैश्च संपूर्णं दत्वा वेश्म हिरण्मयम्।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महायशाः ॥
नाम्ना च द्युतिमान्नाम साल्वराजप्रतापवान्।
दत्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥
मद्रराजश्च राजर्षिः दत्वा कन्यां सुमध्यमाम्।
सुवर्णहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥
रोमपादश्च राजर्षिः शान्तां दत्वा सुतां प्रभुः।
ऋष्यशृङ्गाय विपुलैः सर्वकामैरयुज्यतः ॥
दत्वा शतसहस्रं तु गवां राजा प्रसेनजित्।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥

एते चान्ये च बहवो दानेन तपसा सह।
महात्मनो गता स्वर्गं शिष्टात्मानो जितेन्द्रिया ॥
तेषा प्रतिष्ठिता कीर्ति यावत्स्थास्यति मेदिनी।
दानैर्यज्ञै प्रजासर्गै एते हि दिवमाप्नुयु ॥

अर्थानामुत्तमे पात्रे श्रद्धया प्रतिपादनम्। दानमित्यभिनिर्दिष्टं सर्वशास्त्रैश्चनिश्चितम्॥
द्विहेतुषडधिष्ठान षडङ्गं षड्विपाकयुक्। चतुष्प्रकारं त्रिविधं त्रिनाश दानमुच्यते॥

नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम्।
श्रद्धा भक्तिश्च दानाना वृद्धिक्षयकरे स्मृते॥

धर्ममर्थं च कामं च व्रीडाहर्षं भयानि च। अधिष्ठानानिदानस्य षडेतानि विदुर्बुधा ॥

## दानभेदाः

पात्रेभ्यदीयते नित्य अनपेक्ष्यप्रयोजनम्। केवलं धर्मबुध्या यद्धर्मदानं तदुच्यते॥
प्रयोजनमपेक्ष्यैव प्रसगाद्यत्प्रदीयते। तदर्थदानमित्याहु ऐहिक फलहेतुकम्॥
स्त्रीपानमृगयाक्षाणां प्रसगाद्यत्प्रदीयते। अनर्हेषु च रागेण कामदान तदुच्यते॥
ससदि व्रीडया स्तुत्या चार्थार्थिभ्य प्रयच्छत। प्रदीयते च यद्दानं व्रीडादानं तदुच्यते॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षाद्यत्प्रदीयते। हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तका॥
आक्रोशानर्थहिंसाना प्रतिकाराय यद्भवेत्। प्रतिबन्धकराहित्यहेतवे तत्प्रशस्यते॥
भयदानमिति प्रोक्त फलदं नैव यद्भवेत्। अपापोरोगिधर्मैकदित्सुरव्यसनश्शुचि॥

अनिन्द्यशिवकर्मा च षड्भिर्दाता प्रशस्यते।
पात्र श्रद्धा च भक्तिश्च देयमित्यभिचिन्तनम्॥
देशकालश्च दानाना अङ्गान्येतानि षड्विदु।
विशुद्धस्त्रावृत्तिश्च घृणालु सकलेन्द्रिय ॥

विमुक्तो योनिदोषेभ्य ब्राह्मण पात्रमुच्यते। सौमुख्याद्यभिसंप्रीतिरर्थिनां दर्शने सदा॥
सत्कृतिश्चानसूया च तथा श्रद्धेति कीर्त्यते। अत्यावश्यककर्तव्यचिन्तनं भक्तिरुच्यते॥

द्रनं मया देयं तदा तस्मै च तत्र वै । अभिचिन्तनमित्युक्त मित्येव यत्तदु स्मृतम् ॥
।प्रतीर्रादिदेशः दानकृत्याय चोदितः । देश इत्येवविद्वद्भिः कालोऽपि ग्रहणादिकः ॥
केचित्वत्र पुनः प्रोचुः प्राकारान्तरमाश्रिताः ।
तमप्यत्र प्रवक्ष्यामि महात्मानो जितेन्द्रियाः ॥
नराबाधमक्लेशं स्वयत्नेननार्जितं धनम् । स्वल्पं वा विपुलं वापि देयमित्यभिधीयते
यत्र यद् दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः ।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥
ष्फलं निष्फलं हा(दा)नं तुल्यं विपुलमक्षयम् । षड्विपाकयुगादिष्टं षडेतानिविपाकतः

## दानस्यापात्राणि

ास्तिकस्तेनहिंस्तेभ्यः जाराय पतिताय च । मिथुनभ्रूणहर्तृभ्यः परक्षेत्रापहारिणे ॥
उद्दूपकाय च ग्रामद्रोहिणे ग्रामवाहिने । न्यायसंप्रा ( ? ) कपरा जयानन्तमप्यति ॥
अजितोऽहमनिर्लज्जमिति वक्त्रेऽतिपापिने । संजातस्पष्टदुष्कृत्यसत्यनष्टनृशालिने ॥
सत्यसंप्राप्तदौर्गत्यपराजयपराय च । तत्पराजयनिर्लज्जभयराहित्यवाक्छलैः ॥
प्रतिवादिद्रव्यहर्त्रे प्रदत्तं दुष्फलं भवेत् । अयं पापः क्रूकर्मा पापभीतिविवर्जितः ॥
निर्लज्जः कर्कशस्तीक्ष्णः परस्वागतमानसः ।
व्यवहारजितोऽत्यन्तं अजितोऽस्मीति वाद्यपि ॥
देवसन्निधितस्सत्यनष्टस्वनरशाल्ययम् । इति ज्ञात्वापि यस्तेभ्यः दानकर्म समाचरेत् ।
तन्निष्फलं भवेन्नूनं तस्मात्तन्न तथा चरेत् ।
अन्यद्द्रव्यं तस्य भोग्यमन्यप्राप्यं च कालतः ॥
तत्कालैकनिरुद्धं च विवादास्यददुस्तरम् । परबाधाकरं लुमं पुनः साधारणं तथा ॥
महदप्यफलं दानं श्रद्धया परिवर्जितम् । तद्धीनं दानमित्युक्तं न कार्यं तच्च निन्दितम् ॥
यथोक्तमपि यद्दत्तं चित्तेन कलुषेण वा । तत्तु संकल्पदोषेण दानं तुलयफलं फवेत् ॥
युक्ताङ्गैः सकलैः षड्भिः दानं स्याद्विपुलोच्यम् । अनुक्रोशववादत्तं दानमक्षय्यतां व्रजेत्

ध्रुवमानाह्निकं काम्यं नैमित्तिकमिति क्रमात्।
वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते बुधैः ॥
प्रपारामतडागादि सर्वकामप्रदायकं। ध्रौवमित्येव निरुपातं धर्मनिष्ठैर्महात्मभिः ॥
तदाह्निकमित्याहुः दीयते यद्दिनेदिने। अपत्यविजयैश्वर्यस्त्रीबालार्थं यदिष्यते॥
इच्छासंस्थं तु तद्दानं काम्यमित्यभिधीयते। कालापेक्षं क्रियापेक्षं अनापेक्षमिति स्मृतम्॥
त्रिधा नैमित्तिकं प्रोक्तं पुनः सर्वं द्विधा स्मृतम्। सहोमं होमरहितं समन्त्रकममन्त्रकम्॥
सद्धर्मकाधर्मकाभ्यां द्विविधं तत्त्रिधा मतम्।
स चोत्तमानि चत्वारि मध्यमानि विधानतः ॥
अधमानि च सर्वाणि निश्चितमिदं विदुः।
अन्नं दधि मधु क्षीरं गोभूरुक्माश्वहस्तिनः ॥
दानान्युत्तमसञ्ज्ञानि सुमहद्द्रव्यदानतः। पुस्तकाच्छादनावासपरिभोगौषधानि च॥
दानानि मध्यमानीह मध्यमद्रव्यदानतः। उपानत्प्रेंखयानानि छत्रपात्रासनानि च॥
दीपकाष्ठफलादीनि चरमं बहुधोच्यते। दत्तमित्यधीतं च विनश्यत्यनुकीर्तनात्॥
तस्माद्दत्तादिकं स्वेन कीर्तयेन्न कदाचन। श्लाघानुक्रोशनाभ्यां च भग्नतेजा विपद्यते॥
तस्मादात्मकृतं पुण्यं यत्नेन परिपालयेत्। पुनरन्ये तु विबुधा दानं प्रोचुश्चतुर्विधम्॥
नित्यं नैमित्तिकं काम्यं विमलं चेति नामतः। अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे॥
अनुद्दिश्य फलं यत्तद्ब्राह्मणाय तु नित्यकम्। यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे॥
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम्। अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते॥
दानं तत्काम्यकं प्रोक्तं मुनिभिर्धर्मचिन्तकैः। यदीश्वरप्रीणनार्थं ब्रह्मविद्भ्यः प्रदीयते॥
चेतसा भक्तियुक्तेन दानं तद्विमलं स्मृतम्। येन येन हि भावेन यद्यद्दानं प्रयच्छति॥
ते नतेन हि भावेन तत्तत्प्राप्नोति निश्चितम् ॥

नित्यं द्विजन्मनां प्रोक्तं श्रावण्यां वेदहेतवे।
पौर्णमास्यामुपाकर्म प्रथमं ब्रह्मचारिणाम्॥
प्रथमोपाकृतिसमं नेह कर्म शुभान्तरम्। तत्रैव क्षुरकर्मादौ ततः स्नानान्तरात्पुनः॥
अभ्यञ्जनं यथावच्च संभवैर्भूषणादिभिः। अलंकारैश्च वासोभिः परैर्नीराजनादिभिः॥
पीतकौपीननिबन्धदर्पणदण्डमुख्यरपि। पीतमौञ्ज्यजिनस्तावक्षौमकुस्तुम्बरादिभिः॥
प्रवेशनिर्गमाभ्यां च स्वस्तिवाचनपूर्वतः। सर्वमङ्गलवाद्यौघरञ्जनक्रियया तदा॥
काण्डर्षिवेदहोमेन विरजाहोमतस्तदा। पाहित्रयोदशमहा जपहोमार्चनादिभिः॥
कामो कार्षीज्जपेनैवं तन्मन्युरजपेन च। वेदाद्युपक्रमसहा सत्कर्मक्रियया ततः॥
तत्समस्तूत्तमो नास्ति तदाद्येव द्विजन्मनाम्। वेदादानपरिग्राहशास्त्रप्रवचनादिभिः॥

लोके सर्वत्र दृश्यन्ते तदाद्येव च वर्णिनाम्।
नित्यं कालद्वये होमः समिधामटवीक्षिताम्॥
नित्यं कालत्रये सन्ध्यासमतिक्रमणं गुरोः।
अत्यन्तशिक्षया स्नानं भिक्षाचर्यादिकं तथा॥
वेदव्रतानां सर्वेषां समनुष्ठानमेव च। तत्तदुक्तेन विधिना तदा ह्येव न तत्पुरः॥
उपक्रमः प्रकर्तव्यः प्राजापत्याख्यकाण्डके।
प्राजापत्यव्रतमिदं विधिना विधिचोदनात्॥
कर्तव्यत्वेन कथितं तदारम्भेऽप्युपाकृतिः। उत्सर्जनं तत्समाप्तौ द्वयमेकस्य केवलम्॥
कर्तव्यमेव तन्मन्त्रैः चरिष्यामीत्यचारिषम्। अग्ने व्रतपतेत्येव तच्चतुष्टयमन्त्रकैः॥
एवं नवानां काण्डानामाद्यानां करणं बुधैः। पृथक्त्वेन प्रकथितं सोऽन्यानां च ततस्तथा
उपाकृतिस्तथोत्सर्गः नवानां च पृथक् पृथक्।
तत्तल्लिङ्गैश्च तन्मत्रैः तत्तकाण्डर्षिभिस्तथा॥
पश्चादाग्नेयकाण्डानां समानां करणं बुधैः। प्रचोदितं विधानेन तत्तत्तल्लिङ्गमन्त्रकैः॥
अनन्तरं वैश्वदेवकाण्डानां पूर्ववत्तथा। उत्सर्गोपाकर्मणी ते कतव्यत्वेन चोदिते॥
एवं चतुश्चत्वारिंशत्काण्डानां समुपक्रमे। समाप्तौ च यथाशास्त्रमुपाकर्म ततः पुनः॥

उत्सर्जनं च कुर्वीत विधिनाऽनेन मन्त्रवित् । वेदं समभ्यसेदुक्त्या गुरोरेव सकाशतः ।

वर्णान् सम्यक्पदमेव सादयित्वा तत पुन ।
तदङ्गानि च तन्मध्ये निद्रालस्यादिवर्जित ॥
लोभमोहक्रोधहीन वसन्नित्य गुरौ कुले ।
श्रोत्रियानागतान्बन्धून् यश्चनो याचकानपि ॥
पितरौ प्रणमन् भक्त्या नित्य कालद्वयेऽप्यति ।
भिक्षान्नमश्नन्प्रयतो मधुमासादि वर्जनात् ॥

स्वाध्यायकृतशास्त्रौघ सर्वविद्या विशारद । ऊहापोहविशेषज्ञ क्रियावस्तु विशेषवित्
सर्वमन्त्राथकुशल सूत्रन्यायविचक्षण । मीमांसान्यायकुशल धर्माधर्मविवेकवान् ।
अध्वर्युद्गातृहोतृणा कार्यकृत् तपेशल । प्रायश्चित्तेन कुशल स्नातको प्रभवेद्ध्रुवम् ॥

तानि काण्डानि सन्त्य प्रवदामि च सुस्फुटम् ।
पौराडाशा याजमानो होता ( ? ) हौत्रमेव च ॥

पितृमेधश्च कथिता ब्राह्मणेन च तत्परम् । तथैरातु ब्राह्मणेन प्राजापत्यानि चोदिरे ॥
तत्काण्डेऽरविशेषज्ञा ऋमिष्ठानां महर्षय । तद्विशेष प्रकाण्डार्थं सम्यगेवद्विभज्यते
पौराडाशा इषे त्वाद्या अनुवाकास्त्रयोदश । तद्ब्राह्मण तृतीयस्या प्रसुप्तं पाठकद्वयम्
आद्या षडनुवाकाश्च द्विचत्वारप्रपाठके । समिधा यनतीत्याद्या अनुवाकास्तथा दश
अनुब्राह्मणमनन्त प्रश्नद्वयगत परम् । मन्त्र त्वाद्या याजमाना अनुवाका वहीरिता
अनुवाकान्तन पञ्च पाकयज्ञादिकाश्च षट् । याजमानब्राह्मणानीत्युच्यन्ते वेदवित्तमैः
चित्ति स्नुगाद्या मन्त्रा ः लारा स्त्रिधा इमौ । द्वितीय ह्यष्टके प्रश्ने द्वितीयस्तृतीयकः
सप्तमियाज्ञिक प्रश्न इष्टिहौत्रमितीरित । देवा वै नेति पञ्चाऽनुवाका स्त्रिधा स्मृता
पर युवास प्रश्नस्तु पितृमेध ईरीरित । इत्युक्त काण्डसप्तक प्राजापत्यं प्रकीर्तितम् ॥

काण्डानामथ सौम्याना क्रियते च निरूपणम् ।
आध्वयका प्रश्नास्तैव दक्षिणा ( च ) तत परम् ॥

समिष्टयजुषां स्नाम सामन्त्र भूतानया । यानपय शुक्रियाणि सयथापि तथा पुन

स ब्राह्मणानि सानुब्राह्मणान्यपि यथाक्रमम् ।
सौम्याख्यानि तु काण्डानि कथितानि महात्मभिः ॥
ाराद्यात्र वै तेषां पुनस्सम्यङ् निरूप्यते । आप उन्दन्तु देवस्य प्रश्नद्वितयमध्वरः ॥
ासंपद्यमानोऽनुवाकावप्यध्वरौ मतौ । सजोषा इन्द्रपर्यन्ता आददे प्रमुखा ग्रहाः ॥
ुत्यमनुवाकान्त्रीन् दक्षिणामूचिरे बुधाः । ब्राह्मणत्रयमेतेषां षष्ठः काण्ड उदाहृतः ॥
सत्रात्प्राचोऽनुवाकांस्त्रीन पितद्ब्राह्मणं विदुः ।
उभये वै प्रश्न आद्यः पञ्चमौ षष्ठसप्तमौ ॥
ग्नेः प्रपाठके तुर्यमन्तिमं चतुरस्तथा । अध्वरब्राह्मणं प्राहुरनुवाकानिमानपि ॥
त्रिवृत्स्तोम इति प्रश्नः समाख्यः परिकीर्तितः ।
नमो वाचे तदूर्ध्वौ तु प्रश्नौ शुक्रिय तद्विधी ॥
ाकयज्ञमिति प्रश्नः सप्तमाद्याः षडीरिताः । अनुवाका वाजपेयाः तद्विधीन्प्रथमेष्टके
श्ने तृतीये देवा वै यथेत्यष्टौ प्रचक्षते । एवं नवोदितान्काण्डान् सौम्यानाहुर्मनीषिणः
आग्नेयानां च काण्डानां क्रियतेऽथ निरूपणम् ।
अग्न्याधेयं त्वग्निहोत्रमग्न्युपस्थानमेव च ॥
ाह्मग्निचयनं तद्वत् युञ्जानादिकमप्यति । सावित्रचयनं चैव नाचिकेताख्यकं तथा
ाथा वैश्वसृजाख्यं च पुनरारुणकं ततः । तद्ब्राह्मणमनुब्राह्मणञ्चापि क्रमतोदितम् ॥
ाग्ने काण्डजालं स्याद्वेदमध्य गतं तथा । स्पष्टार्थमधुना भूयः सम्यगेव निरूप्यते
ाधानं कृत्तिकास्वादि प्राङ् नवेत्यनुवाकतः । प्रथमे पुनराधानं काण्डे पञ्चमपाठके ॥
ाधानुवाकाश्चतुरः तथैव प्रथमेऽष्टके । तृतीय पाठकद्यानुवाकं च विबुधा विदुः ॥
ुपप्रयन्त इत्याद्यमग्न्युपस्थानमुच्यते । ममान्तमग्निहोत्रस्याङ्गिरसः पाठको विधिः॥
ेद्स्यादनुवाकौ तच्छेप तन्निष्कृतित्वतः । अग्निश्चतुर्थकाण्डोऽनुवाकावायुप आदिमौ
तस्य शेषतया प्रोक्तं तस्यैकं ब्राह्मणं बुधाः ।
आदितश्चतुरः प्रश्नानाहुः पञ्चमकण्डजान् ॥
एकं द्वावेकमेकं चेत्यनुवाकान्विना क्रमात् । उत्तरेषु त्रिषु प्रश्नेष्वनुवाका दशोदिताः

अपर ब्राह्मण प्राहु सप्ताम्नेरिद्धमीरिता ।
ख्यातान्येव हि काण्डानि ह्याग्नयानि मनीषिभि ॥

अथान्यते क्रमेणैव वैश्वदेवाख्यकाण्डकम् । राजसूयक्रतुस्त्वेक पशुबन्धास्तत परम्॥
ष्टय यजस्तथा पश्चान् नाक्षत्रा इष्टयस्तथा । द्विवश्येना अपाघाश्च पश्चात्सौत्रायणस्तथा
उपहोमा मुन्त्रवाक्यान्युपवाक्यानि स परम् । पश्चाद्याज्यानुवाक्याश्चाश्वमेधस्तत पुन
पुपमेधश्च सुमहान् सौत्रामणिरथापर । अच्छिद्र पशुहौत्र च सर्वोपनिषदस्तथा॥
गनद्वा ब्राह्मणवाक्यानि हतुब्राह्मणमेव च । तथैवैकाग्निकाण्डश्च वैश्व देवानि षोडश॥

काण्डानि ( यिन्ति ) न्येव काण्डर्षिभिर्महात्मभि ।
एतेषां विशदार्थाय पुन सम्यक् निरूप्यते ॥
आद्य काण्डाग्म प्रश्नो राजसूय प्रकीर्तित ।
तद्ब्राह्मण त्रय प्रश्ना पशाद्या प्रथमा(मे)ष्टके ॥

(      ) समिधा श्रुतमेव तदुत्तर । चत्वार्यनुवाका राजसूयात्मका इमे॥
नायकश्च प्रान्य पशव पर काम्यम्यमाय । प्रश्नास्तृतीयकाण्डाम् पानुवाक्यमुदाहृत॥

उभायामान्यान्यानु वाक्याद्यधिकविंशति ।
यज्ञाही यनुवाकश्च याज्या विद्वद्भिरीरिता ॥

समिद्धिरा चीमुनम्यानुवाकचतुष्टयम अग्नेमन्वे समिद्धो गायत्री त्रिष्टुप् तदुत्तर
एकादशाज्यो योवा अनुधनि च पाठक । अन्ताश्चद्वश सप्तमेऽपि काण्ड प्रश्नचतुष्टये॥
विवर्जित अनुवन तुयतुद्वादशाग्नि(धि)का अनुवाका अश्वमेधमन्त्रास्तद्ब्राह्मण बुधा
प्रजात्कौ सगिरन्त माडप्रष्था तन्त्रगौ प्रजापते पवस्वानुवाकावपि तथेरितौ॥
यदक्रन्दिक प्रश्न द्वयो व्यवरन्शान्तिका । या वा अग्नौ तत पून माग्नेयोष्ट तदुत्तर

यो वा अश्वस्य त चा (        ) मन्द्विधय स्मृता ।
मात्रायण वह्निरसमिन्नादि समुदाहृतम् ॥
चमाव नुवाका तमश्वमेधविवर्जित ।
न व ना यनुवाकाश्च पञ्च सौत्रायण विदु ॥

जुष्ट प्राणादिकौ प्रश्नावुपहोमान्प्रचक्षते ।
आहुः सूक्तानि विबुधाः पीवोन्नमिति पाठकम् ॥
अञ्जन्ति त्वामिति प्रश्नः पशुहौत्रमुदाहृतम् ।
स्वर्द्धीत्वा सर्वा नम्रिनं इति प्रश्ना यथाक्रमम् ॥
सौत्रामण्यच्छिद्रनक्षत्रेष्टयस्तामुदाहृताः । आद्येऽके पञ्चमस्य पाठकस्यादिमा अपि ॥
अनुवाकास्त्रयो नक्षत्रेष्टिकाण्डतया मताः ।
सौत्रामणेः शेष उक्तोऽनुवाकोऽयं युवस्विति ॥
अष्टौ तु काठके हव्यवाडादीनां प्रचक्षते । संज्ञानमिति सावित्रो नाचिकेतस्ततः परः॥
प्रोक्तो ब्रह्मानुवाकश्च चातुर्होत्रिय ईरितः । प्रोक्तो वैश्वसृजोऽयं चेत्यनुवाकचतुष्टयम् ॥
तेषां चतुर्णां काण्डानां हव्यवाड् ऋषिरीरितः ।
तुभ्यं देवेभ्योऽनुवाकौ दिवःश्येनेष्टयस्तथा ॥
तपसा देवेभ्य इति त्वपाद्या उदिता बुधैः । ऋषयो वैश्वदेवास्तु काण्डयोरनयोर्मताः ॥
भद्रं कर्णेभिरित्युक्तः प्रश्ने अरुण केतुकः । अरुणाः काण्ड ऋषयस्तस्य तत्रैव कीर्तिताः
शं न इत्यनुवाकानां द्वादशानां मनीषिभिः ।
सांहित्यो देवताः उपनिषदः सं प्रकीर्तिताः ॥
उत्तरेषां त्रयाणां तु वारुण्यस्समुदीरिताः ।
प्रपाठकस्याम्भसीति याज्ञिक्यः प्रतिपादिताः ॥
स्वाध्यायब्राह्मणं प्राहुः सहवा इति पाठकम् ।
ब्रह्मा स्वयं भूः स्वाध्याय ब्राह्मणस्यर्षिरुच्यते ॥
प्रश्नः पुरुषमेधस्तु तृतीयाष्टक तुर्यकः । राजसूयादिका वैश्वदेवाः काण्डास्तु षोडश ।
एवं चतुश्चत्वारिंशत्काण्डानां तैत्तिरीयके ।
महाशाखाविशेषेऽस्मिन् कथिता ब्रह्मवादिभिः ॥
सर्वेषामपि चैतेषां काण्डानां तु पृथक् पृथक् ।
उत्सर्जनोपक्रमयोः काण्डर्षिं तं प्रधानकम् ॥

महात्मनां सदस्यानां चापरास्विति मन्त्रतः ।
स्वात्मानमनुलिप्याऽथ मणिं सौवर्णमेव च ॥
ग्रोतमलंकारयोग्यमौपधतस्ततः । उदपात्रे परिप्लान्यापाशोऽसीति मन्त्रतः ॥
सार्धतः कण्ठमूलेन धृत्वा तन्मणिमालिकाम् ।
ततो बादरिकं नूत्नं मणिं कृत्वा च पूर्ववत् ॥
मन्त्रकं हस्तमूले विभृयाद्विधिनैव वै । तद्धारणं वामकरे दक्षिणे प्रतिसरं यतः ॥
तदुत्तरं वस्त्रं रेवतीस्त्वेति मन्त्रतः । धृत्वा तस्य दशायां च प्रवृत्तौ विधिना कृतौ ॥
प्रबध्य तूष्णीं तत्पश्चात् दर्व्यामादाय तेन वै ।
आज्यमादाय विधिना चायुष्यमिति मन्त्रकैः ॥
ष्टभिश्चापि जुहुयाज्जयादीनपि हावयेत् । ब्रह्मोद्वासनकालेऽथ प्रवृत्तश्चैकमुत्तमम् ॥
तुर्भिरेव विभृयादितरंच तथैव वै । शुभिके शिरमन्त्रेण स्रजां शिरसि धारयेत् ॥
माहरदिति मन्त्रेण मालिकां च परिग्रहेत् । यदाऽञ्जनेति मन्त्रेणाङ्क्ते तच्चक्षुषी तदा
यि पर्वतमन्त्रैस्तैः चतुर्भिरथ वैकतः । पर्वतं समुदेक्षेत यन्मे वर्चेति मन्त्रतः ॥
ादर्शनं समुद्वीक्ष्य प्रतिष्ठेस्थेति मन्त्रतः । उपानहौ योजयीत पादयोरिति तत्क्रमः ॥
ं दक्षिणपादे वै ततः स्पष्टं हि केवलम् । प्रजापतेरिति ततः छत्रं नूत्नं धरेच्च वै ।
वस्य त्वेति मनुना वैणवं दण्डमेककम् । भृत्वा द्वे सदो मध्ये पश्चाद्वाचं च यच्छति ॥
क्षत्रोदयपर्यन्तं नक्षत्रेषूदितेष्वथ । दिशं प्राचीमुदीचीं वा दिशं निष्क्रम्य वैधतः ॥
षीण्यदुर्वीरित्येतदर्थत्रयक ऋच्छतः । उपस्थाय दिशः सर्वा नक्षत्राणि ततस्तदा ॥
स्येचन्द्रमसं चापि पश्चान्मित्रेण येन वा । केन वा भाषणं कुर्यात्पत्नीलाभाय केवलम्
ावत्प्रयोजनं ब्रूयादधिकं नैव तद्वदेत् । एवं कर्तुं शक्तिहीनः मन्त्रसंस्कारदुर्भगः ॥
तूष्णीममन्त्रकं सर्वं कुर्यादिति विधिस्स तु ।
कोऽपि गौणश्च कथितः न मुख्य इति वैदिकाः ॥
ोचुः किल महात्मानः तस्मादक्षस्तथा चरेत् । स्नानमेतद्विधानेन कृत्वा तत्परमेव वै
द्य एव विधानेन लक्षण्यां स्त्रियमुद्वहेत् । अनाश्रमी क्षणमपि न तिष्ठेदिति गौतमः ॥

व्रती न ब्रह्मचारी स्यान्न गृही न वनी यति ।
अतस्तस्मिन्दिने यत्नाद् द्वितीयाश्रममाचरेत् ॥
सती ज्येष्ठे विना त वै हित्वा स्नात्वा स्वय त्वरन् ।
विवहेन्न तु तूष्णीक सोऽनर्थसुमहान्भवेत् ॥
परिवेत्ता भवेत्तत्र तज्ज्येष्ठस्तत्कनीयस । परिवित्तिरिति ह्येय तावुभौ सेवकर्मणाम् ॥
अनर्हौ द्विजइन्द्रेषु निन्दितौ कुत्सितावपि ।
उपक्ष नेयहतौ पापौ पतितौ पापिनौ तव ॥
वर्जनीयौ भवेतां वै प्रायश्चित्तशतैरपि । शुद्धात्मानौ भवेतान्न यावदाचन्द्रतारकम् ॥
कृत्यमेतदति क्रूर प्रायश्चित्तबहिष्कृतम् । दत्ते वर्णिनि तिष्ठेत्तु यदि जातस्तदौरस ॥
तस्यैव ज्येष्ठता तस्य विवाहानन्तर परम् । ब्रतस्य कार्य उद्वाह नोचेत्तस्य दुरात्मन
न दोषो जायते घोर प्रायश्चित्ताक्षमो महान् ।
तद्दुष्ट परिवित्तत्व परिवित्तित्वमेव च ॥
मौञ्जी विवाहयत्नैस्तै तत्पूर्वकरणस्वत । उभयोर्नायते भूत तयोर्ज्येष्ठकनिष्ठयो ॥
अनुजोद्वाहन पश्चात्तज्ज्येष्ठ करपीडनम् । स्वस्य त्यक्त्वैव तूष्णीक यदि तिष्ठेत्तत पुन
प्रायश्चित्तशतै स्वस्य गृहोत्का तुलितोऽपि वा ।
विप्रश्रणी निवासाय विप्रैस्सचारिणाय वा ॥
अर्हाभासो भवेत्सत्य न चेद्रश्मि तम पुन ।
श्मशानोल्का समानस्तथाद्ग्रामायासा क्षमस्तराम् ॥
प्रभवेदेय स ज्येष्ठ कारणान्तरकल्पनात् । विवहेद्यदि पापात्मा कुलनिर्मूलकारक ॥
कपालचण्डालसम न ग्राममस्थानमर्हति । अय विधि कन्यकाना सम इत्येव सर्वत
सर्वेषामपि वर्णाना धर्मज्ञै समुदाहृत । यमयो पुत्रयोर्मध्ये पूर्वं जात कनीयस ॥
पश्चाज्जातस्तु विज्ञयो ज्येष्ठ कर्मसु सत्कृत ।
आहिताग्नि सोमयाजी क्षुद्रनिद्वहिनिन्महान् ॥
जाताष्ट पुत्रोपापश्च अपि दत्त स्वयं सुधी । जननादौ स्मरसाय कनिष्ठत्व प्रपद्यते ॥

अनुपेतोऽप्ययं पुत्रः पितृकर्मणि संगते। ज्येष्ठत्वं समवाप्नोति कनिष्ठत्वं न विन्दति॥

औरसे सति दत्तस्तु स्वकर्तृत्वेन पैतृकम्।

क्रियां यदि चरेन्मोहात्सा क्रिया विधिशून्यतः॥

कृतप्राया न भवति पुनः करणमर्हति। यावत्पुनः क्रिया पुत्र औरसेनाचरेज्जडः॥

पितृक्रियां स्वकर्तृस्वधर्मेण जनितश्रमः। पिता तावत्तस्य नूनं प्रेतत्वेन प्रपीड्यते॥

अयं तावत्सूतकस्य यावत्तत्कर्मशास्त्रतः। करोति विधिना भक्त्या सर्वकर्मसु गर्हितः

तस्माद्धर्मेण विवहन् धर्मज्ञः स्वकुलोद्भवैः। स्वबन्धुभिः स्वमित्रैश्च सर्वं शास्त्रविदुत्तमैः॥

समालोच्य प्रयत्नेन सर्वधर्मविवृद्धये। कन्यकां सत्कुलोत्पन्नां सुलक्षणसमन्विताम्॥

सर्वावयवसंपूर्णां दृढाङ्गां रोगवर्जिताम्। असमानार्षगोत्रां च विवहेच्च यवीयसीम्।

वाग्दत्तां कार्यं सिद्ध्यर्थमन्यं नैवा ततादिभिः।

गुप्तां दुर्लक्षणभिया त्रिकटां ह्रस्वकेशिनीम्॥

अतिनीचामतिक्रूरां निष्ठूरोक्तिमतीमिति।

अतिरक्तामतिजवामति भाषणलोलुपाम्॥

करालीं कालिकां रुग्णां पलितां रक्तमूर्धजाम्। अत्यन्तलीलापरमां चरमां चण्डनिष्ठुराम्

कुनखीं श्वेतां निद्रामदसमाकुलाम्। लोलुपां मददिग्धाङ्गीं महारतिपरायणाम्॥

नित्य दुःखमुखीं भीरुं वक्राङ्गीं वक्रनासिकाम्।

अतिदुर्गन्धवदनां भीमदन्तां भयङ्करीम्॥

कपूय कण्टागरलां चटुलां नित्यहासिनीम्।

अतिपारुष्य परमां महामालिन्यचेतसाम्॥

मार्जालनेत्रां पृथुलभीमौष्ठ पुटनासिकाम्।

संकां सांकरिकां जाड्यमालिन्यपरमां खलाम्॥

दीर्घरोमाङ्कितत्तनुं शार्दूलस्वरदुर्धराम्। कलिशीलां विशेषेण मतिमान् संपरित्यजेत्॥

पालिकां स्वनुजां कुभ्रू चर्पकारीं विहाय च।

वरयेत् कन्यकां धीमान् स्वीयवंशाभिवृद्धये॥

शकुनानि परिक्ष्यादौ विचिन्त्य च पुनः पुनः ।
निमित्तान्यपि दिव्यानि हृदयाह्लादकान्यपि ॥
दृष्ट्वा विवाह्यकन्यां चापल्यास्वरितेन च ।
व्यामोहं गमयेन्नैव न तस्मो भवदपि ॥
बन्धुं नेनागतान् दूरात्कन्या दातुं समुद्यतान् ।
वयोऽधिका कार्यकारा ह्लोभात्ता न तु विश्वसेत् ॥
दूरबन्धून्प्रयत्नेन चिरकालविचारतः । वचनादिपबन्धूना सबन्धाय परिग्रहेत् ॥
बन्धुत्वेनागतान्दृष्ट्वा पुरस्कुर्यादतीव च । सुप्रसन्नमुखो नित्यं पूजयेद्रोपयेदपि ॥
शक्त्योपचारं कुर्याच्च दानमानार्हणादिभिः ।
(?) न च क्रुध्याप्तिरस्कुर्याच्च तान्सुत ॥
मिथ्यावाक्यानि तैर्नूयात्तावमन्यश्च भीषयेत् ।
पूर्णकामान्प्रकुर्वीत सत्या शक्त्या तदर्थितान् ॥
सर्ववस्तुविशेषाश्च प्रदद्यादापयेत्तथा । यस्य गेहान्निवर्तन्ते पूर्णकामाः समागताः ॥
तस्य श्रयः सपदश्च वर्धन्ते शुक्लचन्द्रवत् ।
अभ्यागता यस्य गेहाद्विमिनो बान्धवाः स्वकाः ॥
मित्रादयो ब्राह्मणा वा तस्य सा श्रीर्विनश्यति ।
निमित्तानि मनोज्ञानि पश्यन्निश्चैस्सुहृद्गणैः ॥
कन्यादातुर्गृहं गत्वा बन्धुभिर्ग्रामवासिभिः ।
पुण्याहवाचनं मन्त्री कारयित्वा विधानतः ॥
अनुहा म मन्त्रस्तान् स्वयं जप्त्वा तदा तदा ।
दर्शनं दुर्निमित्ताना वाच यच्छन्दिपन्त्यभिः ॥
स्वस्त्ययनमिति मन्त्रश्च होमुचमेव च । शिवं शिवमिति यजुः जपन्वा जापयेदपि ॥
कल्याणादौ विशेषेण वाचयत्तद्गृहं व्रजेत् ।
गृहादवहिस्तस्य पादौ प्रक्षाल्याचम्य सिद्धये ॥

प्राणानायम्य विधिना देशकालौ प्रकीर्त्य च ।
तिथिं वारमृतुं मासं पक्षेण च समन्वितम् ॥
मुच्चार्य प्राकृतेऽस्मिन् न द्याहं स्त्रियमुद्वहेत् । इति संकल्प्य तत्पश्चाद्रक्षाबन्धनमेव च ॥
त्वा यज्ञोपवीतं तद्धृत्वा तन्मन्त्रतस्ततः । चतुरो ब्राह्मणान्नत्वा मदर्थं यूयमद्य वै ॥
कन्यां वृणीध्वं मद्योग्यां यद्वन्धुषु महोन्नताम् ।
इत्युक्त्वा तांस्ततो मन्त्रावादिमौ प्रेषधर्मतः ॥
उक्त्वा तान्प्रेषयेच्चापि प्रेपिता स्तेन तेऽपि वै ।
गत्वा कन्याप्रदातारं प्राङ्मुखं समवस्थितम् ॥
स्वयं तदुन्मुखो भूत्वाऽथवा ते ब्राह्मणः स्वयम् ।
उदङ्मुखं प्राङ्मुखं च प्रत्यङ्मुखमथापि वा ॥
मुद्दिश्य वदेयुर्वै प्रपितामहपूर्वकम् । नप्त्रे पौत्राय पुत्राय चायुष्मै च सशर्मणे ॥
ाक्षाच्छचीन्द्ररूपाय गौरीशंकररूपिणे । वाणीभाषा स्वरूपाय लक्ष्मी गोविन्दरूपिणे
ात्रोपेतामिमां कन्यां नप्त्रीं पौत्रीं च पूर्ववत् । सर्वमुक्त्वा तत्क्रमेण वदेयुस्ते वृणीमहे
युक्ते तैरथ पिता कन्याया स तु चेतसा । चाञ्चल्यरहिते नैव संमत्या स्वजनस्य च
निखिलस्य कलत्रस्य मित्रवर्गस्य कृत्स्नशः ।
वृणीध्वमिति संभाष्य तस्मै दास्यामि संप्रति ॥
मुक्त्वैव ततस्तेभ्यो दत्वा ताम्बूल चेलके । प्रेषयित्वा तमामन्त्र्य स्वस्तिवाचनपूर्वकम्
र्वमङ्गलवाद्यौघचिरण्टीगानपूर्वकम् । अभ्यञ्जनस्नानमुखं कारयित्वा च शास्त्रतः ॥
अलंकारासने रम्ये स्थापयित्वा स्वयं ततः ।
पत्न्या समुपविश्यैव प्राणानायम्य वाग्यतः ॥
हासंकल्पमुच्चार्य मद्वंश्यानां मया सह । दशापरेषां पूर्वेषां पितॄणां मुक्तिहेतवे ॥
न्द्रमण्डलपर्यन्तं यव संख्याभिरेव वै । सूर्यमण्डलपर्यन्तं तिलसंख्याभिरेव च ।
सर्षपाभिस्सप्तर्षिलोकपर्यन्तमित्यपि ।
वालुका ध्रुवलोकाख्यपर्यन्तं ब्रह्मलोकाप्तिसिद्धये ॥

महादानान्तर्वृ त्ति कन्यकादानमुत्तमम् । करिष्यामीति संकल्प्य तस्यै कुर्यात्ततः परम्
मधुपर्कमहापूजां तद्विधानेन पण्डितैः । कन्यादानात्परं वापि पूर्वं वा तं यथाविधि
कुर्याद्विवाहे जामात्रे सम्यगभ्यर्च्य शक्तितः ।
संकल्पानन्तरं तत्रायं ते कूर्चा इति स्वयम् ॥
कन्यादाता स्वयं दद्यात् कूर्चं दर्भमयं शिवम् । वरोऽथ तत्र मन्त्रेण राष्ट्रेत्युपविशेत्तत ॥
आपः पाद्या इति प्रोक्ते आपः पादावनेजनीः ।
इति मन्त्रं जपेत्सम्यक् पश्चात्स्तत्रां स्वयं वरम् ॥
पादौ प्रक्षाल्य पूर्वं तु दक्षिणाद्ग्रिमुखेन वै । पत्नी प्रदत्तनीरेण चन्दनेनार्चयेत्त तौ
तदा वरो मन्त्रयेत मन्त्रेणानेन मन्त्रवित् ।
आमागमित्यपि तदा विराजो दोह इत्यपि ॥
मन्छिद्रसलिलं पूर्वं नीयमानं जपेत च ।
समुद्र(प्रादि)मिति मन्त्रेण मन्त्रोऽन्तं वरो जपेत् ॥
मधुपर्कं नयोश्चारे तस्य विद्यामनु जपेत् । आमागन्निति मन्त्रं चामृतोपेति मन्त्र
तत्पत्नीप्रत्तसलिलं पश्चिमाभिमुखस्थितः । पिबेदेव वरो हस्तात्तदाचमविधानवः
यन्मधुनो मधव्येन मधुपर्कं सहृतत । सकृत्प्राश्य तत तूष्णीम् द्विवारं भक्षयेत्परम्
उत्तरेणाऽथ यजुषा पुनर्नीरं वर पिबेत् । कन्यादाता गौरि सूक्तं गौरस्य मनुं जपेत्
ममेत्यत्र स्वनाम्नो वै पश्चयन्तोच्चारणं भवेत् ।
तदाऽमुष्येत्यत्र पश्चात्कन्यादातुश्च नाम तत् ॥
पश्चयन्तोच्चारणं कुर्यात्स्वयमेव वरस्तदा । अग्नि प्रवाश्यनानु मन्त्राणां सर्वेषां केवलं जप
ओमुत्सृजत पर्यन्तं कटो कार्यस्ममप्रकः । मिद्धमन्नं भूतमिति पठेद्दियपि केचन ॥
प्रोचुर्महान्तो विबुधाः तदन्नस्य निरीक्षणम् ।
वरस्य विधिरित्येव सा विराडिति तत्परम् ॥
ओंकल्पयत पर्यन्तं जपेदिति विपश्चिताम् ।
आचारः सुमहानेवं तदन्ते सुमहानयम् ॥

साक्षाद्गो मधुपर्कोऽयं निन्दितः शास्त्रवेदिभिः ।
मधुपर्कस्य कालोऽयं विवाहः प्रथमो मतः ॥
ानागमः पश्चान् श्रोत्रियस्यागमः परः । श्वशुरस्यागमो राज्ञः वत्सरात्परतः स्वमु
न महतां पूर्वं कन्यादानस्य चोदितः । मधुपर्को महाभागैं स्वमेव महत्स्वथः ॥
कन्यादानात्परं सोऽयं केषां चित्खलु केवलम् ।
आचारो दृश्यते तस्माद्विकल्प इति तं विदुः ॥
कन्यादानात्पूर्वमेव कन्याव्रतमुखादिकम् ।
सत्यो महत्स्यस्तज्ज्ञास्तास्तदन्याद्यास्तु तत्करान् ॥
दुरिति धर्मज्ञ समयो वैदिकैरपि । समनुष्ठित एवायं तद्व्रतं चेदमुच्यते ॥
ीपूजा शचीपूजा सर्वा अङ्कुरदेवताः । यास्तासामत्र पूजा च तत्तन्नाम पदैः परैः ॥
चतुर्थ्यन्तैर्विधानेन सा कार्याऽऽज्ञनमूलकैः ।
निशाविम्बद्वये गौरि शच्या ते तत्र कल्पयेत् ॥
ाद्यांचमनीयादिषोडशैरुपचारकैः । प्रदक्षिणनमस्कारैः स्तोत्रैर्मङ्गलकारकैः ॥
र्चयित्वा ततो भूयो मौनकाष्टेन यत्परम् । तया यत्कुरुते ध्यानं तत्कन्याव्रतमुच्यते
याव्रतात्परं कन्यादानसंकल्प इत्यपि । केचिदाहुः महात्मानः तत्प्रातरिति केचन
तत्परां तादृशीं कन्यां पत्न्यादाय सहैव वै ।
स्वयं प्राङ्मुखमासीनः पश्चिमाभिमुखस्य तु ॥
स्य वस्त्राभरणविहितस्य पुरोऽस्य वै । स्वस्य चाभ्य(भ्युप) विष्टस्य वेणुद्वन्द्वस्थितिर्भवेत्
वधूवरयोस्तत्र पादद्वन्द्व स्थितिर्भवेत् । पूर्ववत्पुनरुच्चार्य स्वगोत्रप्रवरे तदा ॥
प्रपितामहपूर्वेण नप्त्रीं पौत्रीं सुतां च ताम् ।
लक्ष्मीं स्वरूपिणीं कन्यां लक्ष्मीनारायणस्य वै ॥
ारूपिणेऽस्य ते भूयो वरायेति च तत्परम् । प्रजासहत्व कर्मभ्यः इत्येवं प्रतिपादयेत् ॥
प्रतिपादयामीति वदन् धर्मे चार्थे च तत्परम् ।
कामेनाचरितव्येति कर्ता वरमुदीरयेत् ॥

महादानान्तर्वृत्ति कन्यकादानमुत्तमम् । करिष्यामीति सङ्कल्प्य तस्यै कुर्यात्तत परम्
मधुपर्कमहापूजां तद्विधानेन पण्डितै । कन्यादानात्परं वापि पूर्वं वा त यथाविधि

कुर्याद्विवाहे जामात्रे सम्यगभ्यर्च्य शक्तित ।
सङ्कल्पानन्तरं तत्राय ते कूर्चा इति स्वयम् ॥

कन्यादाता स्वय दद्यात् कूर्चं दर्भमय शिवम् । वरोऽथ तत्र मन्त्रेण राष्ट्रेत्युपविशेत्तत ॥

आप पाद्या इति प्रोक्ते आप पादावनेजनी ।
इति मन्त्र जपेत्सम्यक् पश्चात्कन्यां स्वयं वरम् ॥

पादौ प्रक्षाल्य पूर्वं तु दक्षिणाङ्घ्रिमुखेन वै । पत्नी प्रदत्तनीरेण चन्दनेनार्चयेच्च तौ ॥

तदा वरो मन्त्रयेच्च मन्त्रेणानेन मन्त्रवित् ।
आमागन्नित्यपि तदा विराजो दोह इत्यपि ॥
तच्छिष्टसलिल पूर्वं नीयमानं जपेत च ।
समुद्र(द्रादि)मिति मन्त्रेण मत्परोऽन्त वरो जपेत् ॥

मधुपर्के प्रयोक्तारे तस्य चित्तामनु जपेत् । आमागन्निति मन्त्र चामृतोपेति मन्त्रत ॥
तत्पत्नीप्रदत्तसलिल पश्चिमाभिमुखस्थित । पिबेदेव वरो हस्तात्तदाचमविधानत ॥
यन्मधुनो मधव्येन मधुपर्कं सकृत्तत । सकृ प्राश्य तत तूष्णीम् द्विवारं भक्षयेत्परम् ॥
उत्तरेणाऽथ यज्ञुषा पुनर्नीर वर पिबेत् । कन्यादाता गौरि त्युक्ते गौरस्यप मनु जपेत्

ममेत्यत्र स्वनाम्नो वै पष्ठ्यन्तोच्चारण भवत् ।
तदाऽमुष्येत्यत्र पश्चात्कन्यादातुश्च नाम तत् ॥

पष्ठ्यन्तोच्चारण कुर्यात्स्वयमेव वरस्तदा । अग्नि प्राशनातु मन्त्राणां सर्वेषां केवल जप
ओमुत्सृनत पर्यन्त कलौ कार्यस्समप्रक । सिद्धमन्त्र भूलमिति पश्येदित्यपि केचन ॥

प्रोचुर्महान्तो विबुधा तदन्नस्य निरीक्षणम् ।
वरस्य विधिरित्येव सा विराडिति तत्परम् ॥
ओंकल्पयत पर्यन्त जपेदिति विपश्चिताम् ।
आचार सुमहानेव तस्यान्ते सुमहानयम् ॥

साक्षाद्गो मधुपर्कोऽयं निन्दितः शास्त्रवेदिभिः ।
मधुपर्कस्य कालोऽयं विवाहः प्रथमो मतः ॥
नूचानागमः पश्चात् श्रोत्रियस्यागमः परः । श्वशुरस्यागमो राज्ञः वत्सरात्परतः स्मु
येण महतां पूर्वं कन्यादानस्य चोदितः । मधुपर्को महाभागैं रयमेव महत्पथः ॥
कन्यादानात्परं सोऽयं केषां चित्खलु केवलम् ।
आचारो दृश्यते तस्माद्विकल्प इति तं विदुः ॥
कन्यादानात्पूर्वमेव कन्याव्रतमुखादिकम् ।
सत्यो महत्यस्तज्ज्ञास्तात्तदम्याद्यास्तु तत्करात् ॥
कुर्युरिति धर्मज्ञ समयो वैदिकैरपि । समनुष्ठित एवायं तद्व्रतं चेदमुच्यते ॥
ौरीपूजा शचीपूजा सर्वा अङ्कुरदेवताः । यास्तासामत्र पूजा च तत्तन्नाम पदैः परैः ॥
चतुर्थ्यन्तैर्विधानेन सा कार्याऽऽसनमूलकैः ।
निशाविम्बद्वये गौरि शच्या ते तत्र कल्पयेत् ॥
ाद्यार्घ्याचमनीयादिषोडशैरुपचारकैः । प्रदक्षिणनमस्कारैः स्तोत्रैर्मङ्गलकारकैः ॥
अर्चयित्वा ततो भूयो मौनकाष्ठेन यत्परम् । तया यत्कुरुते ध्यानं तत्कन्याव्रतमुच्यते
कन्याव्रतात्परं कन्यादानसंकल्प इत्यपि । केचिदाहुः महात्मानः तत्प्रातरिति केचन
तत्परां तादृशीं कन्यां पत्न्यादाय सहैव वै ।
स्वयं प्राङ्मुखमासीनः पश्चिमाभिमुखस्य तु ॥
वरस्य वस्त्राभरणविहितस्य पुरोऽस्य वै । स्वस्य चाभ्य(भ्युप) विष्टस्य वेणुद्वन्द्वस्थितिर्भवेत्
तद्वधूवरयोस्तत्र पादद्वन्द्व स्थितिर्भवेत् । पूर्ववत्पुनरुच्चार्य स्वगोत्रप्रवरे तदा ॥
प्रपितामहपूर्वेण नप्त्रीं पौत्रीं सुतां च ताम् ।
लक्ष्मीं स्वरूपिणीं कन्यां लक्ष्मीनारायणस्य वै ॥
स्वरूपिणेऽद्य ते भूयो वरायेति च तत्परम् । प्रजासहत्व कर्मभ्यः इत्येवं प्रतिपादयेत् ॥
प्रतिपादयामीति वदन् धर्मे चार्थे च तत्परम् ।
कामेनाचरितव्येति कर्ता वरमुदीरयेत् ॥

तच्छ्रुत्वाऽथ वरः पश्चाद्वह्निब्राह्मणसंनिधौ।
वदेन्नानिचरामीति स्वस्ति प्रतिवचो वदेत्॥

तत्परं फलताम्बूलहिरण्याभरणादिभिः। शाल्मामेण च गत्वा धरणी क्षेत्रमन्दिरैः
सगृह्यावरणाद्यस्य दूरीकुर्यात्परं तदा। जीरकञ्च गुडं मूर्ध्नि निक्षिपेतां वरौ तदा।

देवस्य त्वा मनु जप्त्वा तन्मन्त्रान्ते तत पुनः।
राजास्वेत्यादिकं चाचरा प्रतिगृह्णातु तत्परम्॥

प्रजापतये कन्या ( )। तेनेत्यादि भवेत्तत्र तत्पूर्वं वेति केचन।

तन्मुहूर्तं सुमहति कन्या दृष्ट्वा वरं स्वयम्।
अभ्रातृघ्नी चप कुर्यादघोरेत्यवलोकयेत्॥
अत्रैव वरवध्वौ तौ आयाभ्याममुतः परम्।
मन्त्र्यानि तु कर्माणि प्रनाम्न विधिनैव वै॥

समुत्पादयितव्यास्युरित्यथ तत्क्रमं विदुः। ( )॥

अथ दर्भं समुद्धृत्य चेदं मन्त्रेण वै वरः।
तस्या वध्वाः समूढाया भ्रुवोरन्तरभागतम्॥

समृज्याथ प्रतीचीनं निरस्य च जलं स्पृशेत्। रोम्नादि निमित्तेषु जातेषु यदि वै वरः॥

पीवा इदन्नीति मनु जपतदोषशान्तये।
युग्मान्मन्त्रवतो विप्रान् तत्तत्नानीया(द्)द्रव्य एव वै॥

प्रेरयेद्वै रविधिना अपाग इति मन्त्रतः। दार्ममेण निधायाथ तस्याः शिरसि तत्र च॥

खेनमः खेन मन्त्रेण युगच्छिद्रं तु दक्षिणम्।
तस्मिन् मम प्रतिष्ठाप्य शते मन्त्रेण कर्बुरम्॥
अन्तधाय च तच्छिद्रं हिरण्येत्यादिकैः परैः।
पञ्चभिमनुभिः सद्भिः स्नापयित्वा सकृत्तत॥
परित्विनि च मन्त्रेण वासोभ्यान्तां विधानवः।
अहताभ्यां तथाऽऽद्य चाशासानेति मन्त्रत॥

मासीनां च योक्त्रेण संनह्येति च तेषु वै । पश्यत्सु निखिलेष्वेषु संनह्यात्सुकृतान्ततः
ाङ्गल्यपूजां निर्वर्त्य मङ्गल्येति च मन्त्रतः । बध्नीयान्माङ्गल्यं सूत्रं तत्काले गानपूर्वकम्
दा मङ्गलवाद्यानां विशेषो घोष ईरितः । कर्तव्यत्वेन शास्त्रज्ञैः महाशीर्वचनान्यपि ॥

तस्मिंश्च मङ्गलग्रन्थ्यौ बृहत्सामेति मन्त्रतः ।
रक्षां च भस्मना कुर्यात् तत्राप्येवं विधीयते ॥
आदौ प्रतिसरे चापि वरयोरुभयोरपि ।
तत्सूत्रं भस्मना सम्यक् त्रिस्समृज्य च मध्यतः ॥
बध्वा दीर्घां ··· भिरन्यां दृढां पश्चात्तु मन्त्रतः ।
विश्वेत्तातेति विधिना बन्धनं दक्षिणे करे ॥

रस्य कथितं सद्भिः स्त्रीणां वामकरे तदा । माङ्गल्यधारणात्पूर्वं कौतुकं केचिदूचिरे ॥
त्पश्चादपि केचिद्वै कौतुकं तच्च पूजया । वरयोर्बन्धनं कुर्यादाशीर्वादपुरस्सरम् ॥

सतां सतीनां सवासां सदस्यानां महात्मनाम् ।
एवं यज्ञोपवीतस्य माङ्गल्यस्य च पूजनम् ॥

न्धनं कारयित्वाऽऽदौ पश्चात्तत्कर्म साधयेत् । प्रसङ्गादद्य कथितं तदेतन्निखिलं परम् ॥

आर्द्राक्षतारोपणं च तथैव कथितं शिवम् ।
मङ्गलाचारसंप्राप्तं कपिलाव्यादि चोदितम् ॥
कृत्वाभिमुखं दम्पत्योः पृथक् षोडशदीपकैः ।
अष्टाभिर्वा विधानेन दीपपात्राणि पिष्टतः ॥
कृत्वा तेषु दशास्सिक्ताः कृत्वा तैलादिना ततः ।
दीपानुत्पाद्य सुज्वालान्प्रदक्षिण प(पु ?)रस्सरम् ॥
तौ वेष्टयित्वा तन्मध्ये पात्रद्वयगतान् शुभान् ।
अक्षतांश्च क्षितिं प्राप्तान्धवलान्भूरितेजसः ॥
सत्पात्रयुगलं ताभ्यां पृथङ् निर्दिश्य तत्परम् ।
वरः स्वाञ्जलिना स्वेन पयसा तौ वधूवरौ ॥

उद्वाहः होमसंकल्पं प्राणायामपुरस्सरम्। कुर्याद विधानेन सुलग्ने विप्रसंनिधौ ॥
अग्नीन्धानादिकर्म घृतभागान्तमेव तत्। कृतान्ब्रह्मपुरस्कार चक्षुरन्तं समापयेत्॥
सोमः प्रथमयुग्मेन तामेतामभिमन्त्रयेत्। गृभ्णामीति महामन्त्रचतुष्टयत एव वै॥
तस्याः पाणिं तु साङ्गुष्ठं गृहीयादग्निसंनिधौ। उत्थायाथ तया सार्धमग्नेरुत्तरभागके
एकमित्यादिकैर्मन्त्रैः वरस्सप्त पदानि वै। तद्विधानेन शनकैः कारयीतैव सूनृतात्॥

अन्तात्पदात्तु तास्सर्वान्प्रजपेदत्र वै मनून्।
अग्निं प्रदक्षिणं कुर्याद्ब्राह्मणं चापि दक्षिणे॥

विद्यमानं यथास्थानमुपविश्य कटेऽपि वा। एरकायां भद्रपीठ अलंकारासने शिवे॥

सोमायेत्यादिभिर्मन्त्रैः प्रधानं होममाचरेत्।
अग्नीन्धनादिकार्याणां करणं ऋत्विजाथऽवा॥

सर्वत्र शक्यते कर्तुं तद्धोमश्च तथा पुनः। शक्यते शास्त्रवर्गेण याजमानादिकं परम्॥
उद्देश्य त्यागजालं तु कर्तुरेवाखिलेष्वपि । वैदिकाख्येषु तन्त्रेषु चैवं धर्मज्ञनिर्णयः॥
प्रधानहोमात्परतः तामेतामथचाश्मनि। वह्नौ तूत्तरभागस्थे ह्यातिष्ठेति च मन्त्रतः
अरोपयीत च वरः स्वकरेणैव तां वधूम्। यथावदेव च पुनरुपविश्यासने शुभे॥

अभिघार्याञ्जलौ तस्याः तथा लाजांस्तथाज्यतः।
लाजान्द्विवारं तान्पश्चादावपेचापि पूर्ववत्॥
( ...... ) स्य पुनस्सोऽयं स्वहस्ताभ्यां विधाय तान्।
इयं नारीति मन्त्रेण जुहुयाद्विधिनैव वै।

केचिदत्र महात्मानस्तस्या सोदर्य एव वै। लाजावपनकर्ता स्यात्तद्धोमे समुपस्थिते॥
इत्येवमूचुर्धर्मज्ञास्ते कल्याणनिदानगाः। तस्मात्तु वहवो लोके तद्धोमसमये खलु॥
तत्सोदर्यं समाहूय तान् लाजांस्तन्मुखेन वै। तदञ्जलौ प्रयत्नेन वापयन्ति ततः पुनः॥
तस्य पूजां सुमहतीं वस्त्रभूषणचन्दनैः। प्रकुर्वन्ति श्रुति प्रोक्तैः मन्त्रैरपि विशेषतः॥
तद्धोमानन्तरं पत्न्या वह्निं कुर्यात्प्रदक्षिणम्। तत्प्रदक्षिणकाले तु तुभ्यमग्रमनुत्रयम्॥
जपित्वैव विधानेन पुनरातिष्ठ मन्त्रतः। तमश्मानं पूर्ववच्च वधूमारोप्य पाणितः॥

तन्मन्त्रान्तं यथास्थानमुपविश्य तथा सह । द्वितीयामाहुतिं कर्तुं पूर्ववन्निखिलं चरे
तस्या अर्यमण मन्त्र तत्पर पुनरेव वै । प्रदक्षिणेऽपि ते मन्त्राः तुभ्य मग्रादयस्त्रयः
वक्तव्या एव विधिना तत्पश्चात्पुनरेव वै । तेनैव मनुनारमानं तामारोप्याथ पूर्ववन्
उपविश्य यथास्थानं तृतीयामाहुतिं तथा । त्वमर्यमेति मन्त्रेण हुत्वा च तदनन्तरम् ।
प्रदक्षिणं च वैमन्त्री कृत्वा च तदनन्तरम् । यथास्थानं तथा वध्वा तूष्णीमुपविशेद्वरः
प्रदक्षिणत्रयेऽप्यस्मिन् अक्षयन्नाद्वहिर्मतेन । अक्षगतस्य वह्निर्मानः तत्कालागतयोस्तयो ।
मृत्यु कालस्य शान्त्यर्थे प्रदक्षिणं मुनिश्चितम् । प्रधानहोमकालादौ क्रियमाणे प्रदक्षिणं
सहैव अक्षणस्तद्विमन्त्राविद्धि मुनिश्चितम् । विवाहमात्रे सर्वत्र लाजहोमे उपस्थिते
कालौ मृत्यु सन्निहितौ भवेतां तन्निवृत्तये । सव्रह्मैव पटु साक्षात्तस्माद्ब्रह्मा वहिर्मतेन
यदि कन्या ऋतुमती होमकाल उपस्थिते । प्रसवन्तु तदा सद्यः शतकुम्भाभिषेचनम् ।
तूष्णीक कारयित्वाऽथ प्रधानाङ्गेन तत्परम् । अभिषिच्य व्याहृतिभिः तत्परं पुनरेव वै
हविष्मतीति मन्त्रेण स्नापयित्वाग्निसन्निधौ । अन्यवस्त्रद्वयेनैनामलंकृत्य मुमादिभि ॥

निशाङ्कोपन कृत्वा वर्मर्यास्याहिभिरेव ताम् ।
समन्वग्नि कृत्वा तद्धिं तदनन्तरम् ॥

चतुर्णामग्रयोगात मक्षणाचेन मन्त्रं वा । युञ्जानमन्त्रमुख्येन जुहुयान्नसंसदि ॥
जप्त्वा तन्मन्त्रमुगल पुनर्मन्त्रा यथाविधि । होमशेषं समाप्याथ धेनुमेकां प्रदाय च ॥
न नष्टि दूरन कृत्वा पञ्चगव्य विधानत । पञ्चगव्यं प्राशयेत तत्क्रमश्चात्र वक्ष्यते ॥

गोमूत्र ताम्रवर्णाया श्वेतायाश्च च गोमयम् ।
पय काञ्चनवर्णाया नीलाया एव वै दधि ॥

घृत तु भवर्णाया मत कपिलवर्णा वा । अभाव सर्ववर्णानां सर्ववर्णेष्वयं विधिः ॥
इरावतीद विष्णुर्मन्त्राणेनेति श न नि । अप्ये चैव सोमाय गायत्र्या तदनन्तरम् ॥
प्रणवेन तत कुशान् विरक्षुत तत परम् । गोमूत्र पलमेकं तु अङ्गुष्ठार्धं तु गोमयम् ॥
क्षीरं सप्तपलं चैव दधि त्रिपलमुच्यते । घृतमेकपलं प्रोक्तं पलमेकं कुशोदकम् ॥
पूर्वं कृत्वा देहशुद्धिं प्राशयेत्प्रणवेन तु । पञ्चगव्यं पिबेच्चैव ब्राह्मणानामनुज्ञया ॥

प्राजापत्यस्य कृच्छ्रस्य मद्यः कर्तुमशक्यतः ।
तस्य प्रतिनिधिः कार्यः सोऽयं चात्र निरूप्यते ॥
प्राजापत्यस्य गामेकां तन्मूल्यं वा द्विजातये । दद्याच्च तत्फलं सद्यो लभते तेन तत्कृतम्
भवेदेव न सन्देहः प्रकर्तव्यो महात्मभिः ।
द्वादशानां ब्राह्मणानां भोजनं वा न चेत्स तु ॥
दरिद्रस्याथ मुदितः शक्तस्य द्विगुणं ततः । पारायणं संहितायाः दश साहस्रसंख्यया ॥
गायत्र्याश्च जपः प्रोक्तस्तुलितश्चेति सूरिभिः ।
व्याहृतीभिस्तिलानां च दशसाहस्रसंख्यया ॥
प्राजापत्यस्य कृच्छ्रः स्यादथ वा पुनरुच्यते ।
प्रोक्तो (प्रोक्त) महानदीस्नानं प्रोक्ता सैव महानदी ॥
नित्यप्रवाहसैवान्या कथिता परमोत्तमा । अखण्डा चैव कावेरी सप्तकृच्छ्रफलप्रदा ॥
नर्मदा तुङ्गभद्रा च पयोष्णी च महानदी । असिक्निया वसुधा च शतपर्वा सरित्तटी
सिन्धुद्वीपवती श्वेता कृष्णवेणी पयस्विनी ।
गौतमी शान्तिमत्याख्या ताम्रपर्णी सुविश्रुता ॥
समुद्रगास्तथाप्यन्याः स्वर्णमुख्यादिका अपि । मन्त्रस्नानविशेषेण पञ्चकृच्छ्रफलप्रदाः
सागरस्नानतोऽतीव पर्वस्वेव न चान्यतः । फलं पञ्चदशानां तु चोदितं ब्रह्मवित्तमैः ॥
त्रिंशत्कृच्छ्रफलं तत्र चापाग्रे मौसलेन वै । स्नानतो लभते नूनं पुनर्मन्त्रैस्तु तत्र वै ।
द्वात्रिंशत्कृच्छ्रजं तत्स्याद्भागीरथ्यां तु केवलम् । अष्टोत्तरशतमहाकृच्छ्राणां लभते तु तत्
अशीत्युत्तरसाहस्रकृच्छ्राणां यत्फलं बुधैः । कथितं तत्र विबुधैः गङ्गासागरसंगमे ॥
तदेतत् कथितं सर्वं प्रसङ्गादेव नान्यथा । तादृशे समये तत्र विवाहे समुपागते ॥
क्रियाविशेषतश्चित्तकार्यायैनं हि शुद्धये । सद्यः प्रतिनिधिं कृत्वा कृत्वा तत्परमेव वै ॥
पञ्चगव्यक्रियाशेषं निर्वर्त्यैव क्रमेण वै । पञ्चगव्यं प्राशयित्वा तामेतां तु रजस्वलाम् ॥
तत्कार्यं साधयेत्पश्चाद् अन्यथा पतितो भवेत् ।
पञ्चगव्यप्राशनार्थं तत्स्नानक्रम उच्यते ॥

गोमूत्रं मध्यदेशे तु गोमय पुरतो न्यसेत्।
क्षीरं दक्षिणदेशे [illegible] दधि पश्चिमतो न्यसेत्॥

आज्यमुत्तरदेशे तु ईशान्या तु कुशोदकम्। तण्डुलेष्टदले पद्मे धान्यराशौ न चेत्पुन

अथवा तिलराशौ वा पृथक् पात्रेषु निक्षिपेत्।
गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम्॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि।
तथा शुक्रमसीत्याज्यं देवस्य त्वा कुशोदकम्॥

स्थापयित्वार्चयित्वा च कूर्चेनालोड्य सर्वत। प्रणवेन समाहृत्य पात्रे महति चैकये॥
एकीकृत्य च तत्सर्वं प्रणवेनैव केवलम्। अग्नौ प्रतिष्ठिते पूर्वप्रोक्तेनैव सुवर्मना॥
हुत्वा तद्धोमशेषं च समाप्य तदनन्तरम्। तच्छेषं तया सम्यक्पाययित्वा ततो वर॥

अशेषब्राह्मणयुत कर्तकार्याय ता पृथक्।
प्रदाय दक्षिणां शक्त्या जपादि समुपक्रमेत्॥

प्रान्ते च वरं दद्यात् योक्त्रमोचनन परम्। इमं विष्यामीति मनुयुग्मेनाशीरदीरता॥

नीराजनात्पर सभ्याना तु पूजा समाचरेत्।
तस्मिन्नेव दिने होमात्परतश्चेत्तु सा तथा॥

गृहप्रवेशात्पुरतो दिनत्रयमतीत्य वै। ता तथा स्नापयित्वाऽथ चतुर्थेऽहनि तत्परम्॥
पञ्चगव्य प्राशयित्वा दापयित्वा च गा तथा। गृहप्रवेशकार्याय मध्याह्ने तदुपक्रमात्
कुर्यादेव विधानेन ह्युत्तम्भनविधौ तथा। यदि स्यात्सा वधूरत्र क्रमोऽयं च निरूप्यते
यत्र स्यात्सा तथा तत्र स्थापनीया न चान्यत। चालनीया विशेषेण वह्निरक्षणपूर्वकम्
पश्चाद्दिनत्रयातीते यत्पूर्वोक्तं तु तत्क्रमम्। तत्सर्वमखिलं कृत्वा गोमूत्रशातकुम्भकै॥

दशशान्ति महामन्त्रै चतुर्थेऽहनि तत्परम्।
अभिषेक प्रकर्तव्य न चेमा शुद्धिभाक् [illegible]॥

स्नानात्पर तथा तस्या यावदाहारमेकत्र। विशेषेण प्रकर्तव्यो दक्षिणाधेनुपञ्चरात्॥
तदनन्तरमेव स्यात्र तन्मध्ये कथञ्चन। गृहप्रवेशहोमाख्यस्तानत्तद्वह्निरक्षणम्॥

अप्रमादेन कर्तव्यं तन्मध्ये यदि तच्छुचौ। नष्टे वधूवरौ भ्रष्टौ भवेतामेव केवलम्॥

तद्दोषपरिहाराय कारयित्वा शुभान्ततः।
शनैः परिषदं पूर्णां श्रोत्रियाणां महात्मनाम्॥
सभ्यानां कृत्यविद्यानां यज्वनां ब्रह्मवादिनाम्।
विदुषामाहिताग्नीनां तथैवाग्निचितामपि॥
यथाशक्त्या व्यूहयित्वा पश्चात्तु तदनुज्ञया।
अतिरुद्र महारुद्रैः तामेतां घोपशान्तितः॥
कूष्माण्डैः पावमानीभिः शिवसंकल्पतस्तथा।
सकृज्जापैर्निष्कृतिःस्यादन्यथा सा न शुद्ध्यति॥
विवाहात्पूर्वमेकं सा यदि स्यात्तु रजस्वला।
संत्यज्यैव भवेन्नूनं तामेतां तादृशीं वधूम्॥

योजयेच्छूद्रगोष्ठीषु न ब्राह्मीषु कदाचन। विवाहमध्ये संप्राप्ते ऋतुमत्याश्च संभवः॥

नाङ्गीकार्यस्समैः सद्भिः प्रदूष्यो निन्दितस्त्विति।
नैच्यङ्कतो न्यङ्गभाक्च हीनस्तुच्छस्त्वकच्छकः॥

रण्डा पुत्रसमत्वेन निखिलैरेव लोक्यते। पुत्रस्य पुत्रकायाश्च नैच्यङ्गमनु वर्णयन्॥

व्यभिचारः समुत्पन्नोऽप्ययं केवलमेव वै।
न योग्यः सर्व कृत्यानां तस्य पश्चात्त्रिपूर्पकात्॥

प्रजातानां तद्वंश्यानां तद्बन्धुकृपयैव हि। (... ... ... ...)॥
सदाचरणसंकीर्त्य करणाभ्यां सदाश्रयात्। सर्वसंश्रवणाच्चापि जायते सत्परिग्रहः॥
विवाहाब्दे सूतिकायाः तादृगब्दप्रसूतयोः। रजस्वलायास्तद्वर्षे जनाक्रोशौ महान्भवेत्
विवाहस्य चतुर्वर्षात्पर (...) मार्तवं यदि। स्त्रीणामपयशो नास्ति परं वर्षत्रयाद्यदि

वनितानां जनाक्रोशो नातीव प्रभवेत्परम्।
वर्षद्वयाद्विस्मयः स्याज्जनाक्रोशश्च केवलम्॥

भवत्येव हि वर्षात्तु परं तद्रजसा भवेत्। निन्दाकुत्सात्रर्हणं च तेनात्यन्तायशोभवेत्

जगत्यस्मिन्न् रतर महोत्पैकनिवृत्तये । वैशाखे कार्तिके मासे यदा वा रोचते यदा ।

देवयो शिवयो रामो विष्णोर्वा प्रीतिहेतवे ।
दीपाराधनतो लक्ष्यवर्तिकामंभवात्परात् ॥

मत्तोप गाम्यतन्त्रीर नान्यथा प्रवदाम्यहम् । दीपाराधनकृत्यस्य कार्तिकस्तूत्तमोत्तम

स वैशाखो मध्यम स्यान्माघमासोऽपि सत्तम ।
कार्तिके तन्कृत स्मकोटि कोटि गुणं भवेत् ॥

न तेन तुलितो माघ सर्वमासोत्तमोत्तम । अनन्तगुणितस्यापि सर्वेशास्तस्य पुष्कल

सहस्रवर्तिभि कुर्याद्वर्तिक(र्वार्तिक्यं)स्थाने ऽन्यहम् ।
गोघृतेनाज्य मंत्रेन विशेषेण पुनस्तथा ॥

मधुकर्पित्यर्वर्त्तन सर्वलोमप्रमद वं । यस्मिन्मासे समाप्ति स्यात्तन्मौर्णम्यां समापनम् ।

कुर्यात्तेन विशतेन तस्मिन्नेव कृते तु तत् । सहस्रकोटिगुणितमुपमारहितं परम् ॥

नायत कमसु सर्वेष्वेव नक्षत्रादिन । एकेन दीपदानेन देवदेवस्य कार्तिके ॥

आनन्त सञ्चित पाप तत्क्षणादेव नश्यति । किं पुनर्लक्षसंख्याकैर्वर्तिवृन्दोद्भवै शिवे

दीपस्तंभ नार्क च तत्कल सवापन्न । स एव भगवान्वेत्ति नान्यै(न्ये)र्ब्रह्मादयोऽखिला

मासत्रयस्य ते देवा नामश शास्त्रचोदिता ।
आद्यो दामोदरस्तत्र माधवो मधुसूदन ॥

कार्तिकस्य च मासस्य वैशाखस्य च देवता । महेश्वरो महादेवो वामदेवश्च देवताः

यथाशक्ति सुवर्णेन तत्तन्मासाधिदेवता कृत्वा तु पौरुषेणैव षोडशैरुपचारकैः ॥

पञ्चब्रह्मादिकैश्चापि तत्तन्मन्त्रैस्तथैव च ।
सद्यो जातादिभिर्मन्त्रैः शिवाराधनकर्मणि ॥

सर्वेषामुपचाराणां मन्त्रास्सम्प्रकीर्तिताः । पूजयित्वा विधानेन ऋत्विग्ब्राह्मणसंवृतः ॥

रात्रौ यामेषु सर्वेषु कलशस्थापनादिभि । भक्त्या जागरणं कृत्वा प्रतियामं च पूजयेत्

दशा दशाशेन कुर्यात्तर्पणं च यथाविधि । तर्पणस्य दशांशेन होमं कुर्यात्समन्त्रकम् ॥

तर्पणान्तेन मन्त्रेण पायसं स्याद्घृतान्वितम् ।
इन्ध विष्णु ऋचा(त्र)द्ध पालाश वा विधानतः ॥

घृतं तु विष्णु गायत्र्या होमस्यायं विधि.र्मतः । त्र्यम्बकेण मनुना शिवस्य मनुरूच्यते ॥

गायत्री स्यात्तथा रौद्री होमकर्मणि वै मनुः ।
होमान्ते धूपदीपौ च नैवेद्य च निवेदयेत् ॥
आचार्यपूजनं कृत्वा ऋत्विजामपि पूजनम् ।
क्रमेण कुर्याद्विधिना ब्राह्मणानां च पूजनम् ॥

गौ···त ··· ··· ··· ··· । सवत्सा······सालङ्कारा गुणान्विता ॥
त्रिंशत्फलं कांस्यपात्रं घृतेन परिपूरितम् । सुवर्णवर्तिकायुक्तमाचार्याय निवेदयेत् ॥
अथवा तं यथाशक्त्या दद्यादावश्यकं त्विदम् । व्रताभ ··· वै घृतपूरितम्
यावज्जीवं जीवपत्नी भवेदेव न संशयः । रजो दोषाद्विमुच्येत पौर्णम्यां या ददाति सा

ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यं न कारयेत् ।
या चैवं कुरुते नारी तस्याः पुण्यफलं त्विदम् ॥

ब्रह्मवादि प्रकथितं श्रुतिशीर्षशतैरपि । अवाच्यानि च पापानि रहस्यैककृतानि च ॥
नश्यन्ति तानि सर्वाणि दीपदानप्रभावतः । चण्डालशूद्रकैवर्तरजकादिकगामिनी ॥
ब्रह्मक्षत्रियविट्छूद्रप्रातिलोम्यैकगामिनी । मातुलेयपितृव्यौघभ्रातृपुत्राभिमर्शिनी ॥
बालघ्नी च पतिघ्नी च मातापित्रोर्वधे रता । गोघ्नी वा तस्करी वापि रजस्संकरकारिणी

वह्निदानरता चैव नित्यं चाप्रियवादिनी ।
पत्यौ जीवति या नारी मृते वा व्यभिचारिणी ॥

एवमादि महापापैरावृताऽपि कुलाङ्गना । विवाहाव्दरजोदृष्टिप्रसूतिजननाश्च याः ॥

कृत्वा चैतल्लक्षवर्तिदीपदानाख्यकृत्यतः ।
तेभ्यः पापविशेषेभ्यो लोकोक्त्यादिमहांहसः ॥

मुच्यन्ते नात्र सन्देहः प्रवक्ष्यामि पुनः पुनः । पुरुषोऽपि तथा घोरदुष्कृतानां शतैरपि
संवृतोऽत्यन्तदुष्कीर्त्या कृत्वा चैतत्सु कर्म वै। मुच्यते तत्क्षणादेव नात्र कार्या विचारणा
अतिगुह्यतमं चैतत्सर्वपापापनोदकम् । जातिश्रैष्ठ्यकरं चैव सर्वदा न फलप्रदम् ॥
एकदीपप्रदानेन कार्तिके मधुविद्विषः । कोटयो ब्रह्महत्यानामगम्यागमकोटयः ॥

अनग्निकत्वमेतस्य न जानीमः कथं किमु ।
अपत्नीको ब्रह्ममेधान ध्यायोऽश्रोत्रियोऽपि सन् ॥
नापत्नीको ब्रह्ममेधमात्राध्यायी कथंचन । अश्रोत्रियः पुत्रहीनः ब्रह्मोज्झी वेदविक्रयी ॥
अति मौर्ख्यः त्यक्तभार्यः पितृगो पत्नीक ईरितः ।
अश्रोत्रियात्सपत्नीकाच्छ्रोत्रियो विधुरोऽधिकः ॥
बहुपुत्रवतो वापि कर्मठादग्निहोत्रिणः । सत्कर्मवत्पुत्रवांश्च प्रतिग्रहपराङ्मुखः ॥
पात्रं न्यूनमपत्नीका च्छ्रोत्रियाद्वेदवर्जितः । ब्राह्मणो यदि वेदेन वर्जितोऽपि सदा शुचिः
कालसन्ध्यापरो नित्यमपरित्यक्तवह्निकः । वैश्वदेवब्रह्मयज्ञसत्क्रियः सतु पूजकः ॥
ब्रह्मण्यो ब्रह्मनिष्ठश्च सततं ब्राह्मणप्रियः ।
वेदमन्त्रप्रियो नित्यं वेदवित्प्रीति(त) मानसः ॥
विशिष्यते श्रोत्रियाश्च ब्राह्मणः पितृकर्मकृत् ।
सद्विवाहसुसंप्राप्तसौभाग्यो ब्राह्मणोत्तमः ॥
कुलाभिवृद्धिं लभते तद्विवाहमतश्चरेत् । प्रसङ्गादिदमाख्यातं श्रोत्रियादिनिरूपणम् ॥
तद्योक्त्रमोचनात्पश्चात् रथोत्तम्भनकालिकाः ।
क्रियाविशेषाः कर्तव्याः परेणाथ च तत्र वै ॥
सत्येनेति च मन्त्रेण रथोत्तम्भनमाचरेत् ।
योगे योगे द्वयेनाथ वाहौ तत्र सुयोजयेत् ॥
सु किंशुकेति मन्त्रेण रथमारोहतां वधूम् । वरोऽभिमन्त्रयीतैवोद्धुत्तरमिति त्रिभिः ॥
तस्या न स्याधिकर्धीनां संपदर्थाभि मन्त्रणम् ।
नीललोहितेति मन्त्रेण मार्गे सूत्रास्तृणं भवेत् ॥
ये वध्व इति मन्त्राणां त्रयेण गमनं भवेत् । तामन्दसेति च मनुं तीर्थातिक्रमणे जपेत्
अयं न इति मन्त्रं तु नौर्यदि स्यात्तदा जपेत् । तामुद्दिश्यैव वरो जपेद्ब्राह्मणसंवृतः ॥
अस्य पारेति च यजुस्तां तीर्त्वाऽथ जपेत्सुधीः । श्मशानोल्लङ्घने पश्चाद्यद्वतेचिदनुक्रमात्
ऋचः षडपि होमे स्युः क्षीरवृक्षाद्यतिक्रमे । ये गन्धर्वाद्यायं जप्त्वा गृहानुत्तरया तया ॥

मन्त्रशयामीति तत्र भूचा सकाशयन्ति ।
आनामग्निनि तता वाह्यौ तौ च विमोचयन् ॥
अय न इति मन्त्रोऽय वाह्ममाचनकर्मणि ।
नियुक्त स्यात्तत पश्चाच्छमवर्मेनि मन्त्रत ॥

चर्मास्तरणक कुर्यादगृहान्भद्रानिति स्वयं । वाचयित्वा च तां पश्चान्तय तामुपवेशयेत्
आगमित्यान्या मन्त्रा इम मयान्यस्तथा । गृहप्रवेशाकायऽस्मिन्प्रधानो होम उच्यते ॥
इह गाव इति प्रान्तरा चमध्यपरिशस्तया । नक्षत्रोदयपर्यन्त नक्षत्रेषूदितेषु वै ॥
वाग्यिमगश्च कन्य तता मौन भजत्तया । सामननि च मन्त्राण तत्र्क्ष पुनमेकक्म् ॥
निक्षिपज्ञाव पुत्रा मा प्रस्नथ इनि मन्त्रत । तस्यै फलानि दद्याच्च एनापत्येति मन्त्रत

स्वनामभिर्द्विरुक्ता स्यात्तय स्यात्सुमङ्गलीम् ।
ध्रुवञ्जिनानि मन्त्राण ध्रुव न दशयन्न वै ॥

समवय इनि नन रशयत्तामरुन्धतीम । गृहप्रवेशकमास्य होमात्परत एव वै ।

नयाम्या भवन्त्वन ब्रह्मणा र्शिणा मन्त्रेन ।
रगाऽत्र यान्ता वध्वा तस्मान्त वधू स्वयम् ॥

गा स्याद्वृषभ वापि दयादिति द्विजासमा । कश्चिन्नाहुर्महात्मान पुन केचित्तु तस्य च

नरम्यापचितायन ब्राह्मणायेति च नगु ।
यथाचार व्यवस्था च कन्या श्रुतिवादतात ॥
स्थालीपाकेत्राग्रस्त रनना स्यात्ततस्तथा ।
त्रिस्पृहर्कालमद्भि स्वम्या नयान्य ॥
मृच्युपस्थाय नग्धालामभिघायावदाय वै ।
द्विवारमाज्ये तत्राभिघाय स्थाली तत पुन ॥

मध्यामौ जुहुयान्नेनद्द्विरावमुद्धृतम मस्थाला पान्वम सोऽय ब्रह्मविदीरित
अथाभिघाय तदन्यमकवारण नद्धवि नदद्विवारा ध्रुवाकिंचिदधिक यद्य तद्धवि ॥
द्विवारमभिघार्यत्र जुहुयानुपस्थल । द्विवारमवदानस्यादस्य त्रिस्पृष्टोऽपि वै ॥

सर्वत्र पश्चाद्वर्त्तीनां विधिर्यं सार्वदेशिकी ।
तामनुयाज समिधं हुत्वा रुद्राय तन्निमग्राय वै ॥
स्मसंनाद्नं हुत्वा तत्ताग्रकुशाकामनः । दर्व्यामभ्यज्य निदधीप मध्यमूले स्रुवे तथा ॥
मूलाञ्जने सव्यकरमयः कुर्याद्विधानतः । त्रिवारमेवं कृत्वाथ तृणापादानतः परम् ॥
पाणिद्वयेन तद्दर्व्या प्रतिष्ठाप्येष्टदेवताः । प्रहरेत्तु तदग्राणि त्रिरुद्दिश्य तृणं ततः ॥
मन्त्रेण प्रहरेद्तद्धुत्वा त्रिर्निवेशनम् । कृत्वा भूमिमुपस्पृश्य मध्यमं परिधिं शुचौ ॥
प्रहृत्याथ तदन्यौ च प्रहरेत्तौ विचक्षणः । तदग्रमुत्तराज्यस्य तदङ्गारेषु इन्नतः ॥
( ... ... ... ) ।
प्राणानायाम्य तत्पश्चादुपोहति विधानतः ॥
परिधीनाभिमन्त्र्याथ तदाघारसमिद्द्वयम् । एकमेकं प्रहृत्यैव विद्वान्देवास्ततः परम् ॥
संस्रावभाज उद्दिश्य सर्वाश्चित्ताहुतीर्हुनेत् ।
अनाज्ञातत्रयात्पश्चादिदं विष्णोः परेण च ॥
त्र्यम्बकादेश्च तथा यज्ञिनाख्याश्च तत्परम् ।
अस्कां द्यौरिति मन्त्रस्य पुनस्त्वा रुद्रकस्य च ॥
व्याहृतीरपि हुत्वाऽथ व्यस्ताव्यस्तैकधर्मतः । प्राणानायम्य तत्पश्चात्कृत्वाऽथ परिषेचनम् ॥
प्रणीत्यामप आनीय सदसीत्यादिकं जपेत् ।
प्राच्यां दिशीति तत्कृत्यं निखिलं च समाप्य वै ॥
समुद्रं च इदं यत्तत् कृत्वा पत्न्यञ्जलौ पयः । निनीय पतितं भूमौ तं निरन्तैः कुशाग्रकैः ॥
शान्तिरस्त्वित्यादिकैश्च शिरसः प्रोक्षणं चरेत् । ततः परिस्तरान्सर्वानुत्तरेण विसर्जयेत् ॥
ब्रह्मणे च वरं दद्याद्दर्शादिषु तु तद्विधिः । शिष्टं तत्प्राशयेद्यत्नाद् ब्राह्मणं सर्पिसंयुतम् ॥
अन्वारम्भणिके तस्मै ब्रह्मणे दक्षिणा परा ।
पूर्णपात्रेण कल्प्या स्यादन्यथा न फलिष्यति ॥
पूर्णपात्रं च तत्प्रोक्तं कपिलादिमहात्मभिः ।
अष्ट मुष्टिभवेत्किंचित्तस्य चत्वारि पुष्कलम् ॥

पुत्रलाभे तु चत्वारि पूर्णपात्रं तदुच्यते । गृहप्रवेशे होमास्त्वेऽप्याग्नेयेऽत्र चरुः परम् ॥
याजकं न तु कर्ता स्यात्कारयितृत्वमेव हि । चरस्थेति महात्मानः केचिदाहुर्मनीषिणः ॥
तेषां तु हृदयं देवो जानाति किल नापरः । समावर्तनमौञ्ज्योश्च सीमन्ते पाणिपीडने

चौलगोदानचिन्तेषु शम्याः कार्याः प्रयत्नतः ।
कार्याः परिधयो नात्र शम्याभावे तु ते वृथा ॥

अन्यत्रैव तस्मात्तु तेषु शम्याः प्रकल्पयेत् । यत्र यत्र चरोर्होमः तत्र तत्र सुखाहुतिः ॥
परिधिग्रहणं कुर्यात्स्रुक्स्रुवौ विधीयते । प्रधानहोमात्परतः चरयोः स्वीयवेश्मनि ॥
समागमनकार्याय सागमध्येति स्मृतम् । दिवसानामनेकेषामतिक्रमणहेतुना ॥
विवाहाग्नेः रक्षणार्थं सायं प्रातस्तदा तदा । तत्कालमात्रसंकल्पं शुद्ध्यर्थमिति वै श्रुतम्
प्रातर्होमं करिष्यामीत्येवं संकल्प्य सायम् । शुनिहोमं प्रकुर्याच्च न चेत्स तु सुवैदिकः ॥
बहिर्निष्ठो भवत्तात् तस्मात्कालेषु तेषु वै । शुनिहोमं विधानेन कुर्यादेव विधानतः ॥
ह्यादानात्प्रभृत्यग्नेः संकल्पस्तदनन्तरम् । परिषिच्याऽथ मन्त्रेण होमश्च परिषेचनम् ॥
ऊर्ध्वादिकं समस्य नात्यन्तिकमपि तत्र वै । स्थालीपाकात्परं तत्र चरयोरुभयोरपि ॥
प्राणायामा अत्र स्युः संकल्पस्य विधानतः । औपासनस्य कृप्तस्य सदा ब्राह्मणसंनिधौ
अथ भूरिति मन्त्राणां पञ्चानां जप्तुमशक्तितः । तथा वायुनिरोधस्य रेचकादेश्च केवलम्

नारीणां योग्यताभावात्तदर्थं स्वयमेव तत् ।
तत्र मन्त्रं स्वयं कृत्वा तत्परं लौकिकं चरेत् ॥

परमेश्वरतुष्ट्यर्थं करिष्यामि तथा तु तत् । वाचयेदेव विधिना सर्ववैदिककर्मसु ॥

नियमाद्य विधिश्चापि सर्वेषां त्वाह सा श्रुतिः ।
महत्त्वमुभयोः प्रोक्तं विवाहप्रभृतिस्फुटम् ॥

---

# औपासनारम्भः

तत्सर्वशास्त्रेषु नीतं च बहुधा तथा । एवमौपासनस्यादौ समारम्भस्य यत्र तत् ॥

तिथेरुक्तः परं कर्ता प्रोक्तौपासनमित्यथ ।

आरप्स्येति वचः प्रोक्त्वा तेषु शृण्वत्सु सत्स्वपि ॥

गेक्तेरथ भूयश्च यावज्जीवमिति ब्रुवन् । तण्डुलैर्वा यवैर्वेति यावदाधानमेव वा ॥

र्धाधानं वाथ पुनः तदेतदखिलं परम् । एकोच्छ्वासेनैव वदेदेवं पत्न्यापि वाचयेत्

औपासनारम्भकाले ह्यभ्यनुज्ञा परास्मृता ।

ब्राह्मणानां सदस्यानां तत्रत्यानां महात्मनाम् ॥

अभ्यनुज्ञाप्रकारोऽयं स्वशक्त्युचितदक्षिणाम् ।

पात्रे कस्मिन्विनिक्षिप्य ताम्बूलैः सहतां ततः ॥

त्न्या सह समाधाय तिष्ठन्वेदमनुं जपेत् । नमो महद्भ्य इत्येवं नमस्सदस इत्यपि ॥

तन्मन्त्रोच्चारणात्पश्चान्नत्वा साष्टाङ्गपूर्वकम् । अशेषे हे ···भे ब्राह्म भवत्पादाग्रदापिताम्

यत्किंचित्तामिमां भक्त्या क्षणिणां कृपयावयोः ।

स्वीकृत्यौपासनारम्भ योग्यतास्त्वित्यति कृत्स्नतः ॥

भवत्त्य(वत्य)नुगृह्णाणेति वाचोक्त्वा पुनरेव वै ।

सं प्रणम्य समुत्थाय तिष्ठेतामभिमुख्यतः ॥

सा सभा चाथका दृष्ट्वा दक्षिणा तां च भक्तितः ।

समर्पितां तां संगृह्य अनयोर्वरयोस्ततोः ॥

औपासनारम्भयोग्यतास्त्वित्येव वदेच्च सा ।

एवं लब्ध्वाभ्यनुज्ञान्तां कुर्यात्संकल्पमेव तम् ॥

पूर्वोदितं यथावच्च ततस्तत्कालिकं पुनः । कृत्वा संकल्पमथ च चत्वारि मनुकं वदेत् ॥

अथ भूया विशपत्र गिल्मन्ध्रान्पटेन च । मनदमन्वतु शृङ्ग मननिष्ठो द्विशीर्षक ॥
निपात्रमन्नरम्न मुखार्मानस्मुचिमित । स्रहातु दक्षिण पार्श्वे देवीं वामे स्वधा तया
निशदशिगदस्तम् शक्तिमन्त स्रु च स्रु वम् । तोमर व्यजन वामे घृतपात्र तु धारयन्
आ माभिमुखमासीन एव रूपा हुताशन । एतान्मन्त्रान्पठित्वाऽथ एष हीति मनु जपेत

अग्न प्राङ्मुखदृव्ध्व ममाभिमुखत स्थित ।
भवति पूर्वभागेऽस्य सलिल निक्षिपत्स्वयम् ॥

चलन तन भावम् स्वयमभिमुख एव वै । विभावसुर्भवदेव तदनन्तरमेव वै ॥
प्राथयन्नाम्रा देव सुप्रसन्ना भवति वै । पश्चाद्भूय प्रार्थयेच वरदो भवमेति च ॥

प्रायनान्तरतो भूया गायत्र्या परितोऽस्य वै ।
शुद्धि चान्न ता कृत्वा परिमृज्य स्वहस्तत ॥

अलङ्कुयान्क्रमशा पुष्पगन्धाक्षतादिभि । स इमे तत्र मन्त्रा स्युरग्नये नम आदिम ॥
नमो हुतवहायेति नमश्चापि हुताचिन(ष) । कृष्णवत्मनेच प्राज्य पश्चाद् धमुखाय च ॥
मरुनिहाय च नम नमो बभ्रुवराय व । अथ मन्त्रोऽयमुदित नमो वै जातवेदसे ॥
( ? ) यज्ञपुरुषायेति नवमो मन्त्र इरित । एवमग्निमलङ्कृत्य परिषिञ्चेत पुन ॥

अग्नि शान्मिरित्तर्वै चतुर्दिक्षु निरन्तरम् ।
पारिषिच्य विधानेन हाव्यामि(मी)ति वदेद्द्विजाद् ॥

जुहुयाति च मन्त्रमत्स्थालीपाक स्मृता । समुद्दिश्य हुतेनित्य प्राह सौर्याहुतिर्वरा ॥

कन्यात्मन सा प्राह श्रुतिस्माभ्री सनातनी ।
तस्मया महाहुया सौयया गृहमधिनाम् ॥

प्रतिनित्य भवभव मुक्तिभुक्तिसमुद्भवम् । यत्फल जायते तादृक फल प्राप्नोति तत्क्षणात्
अगपञ्चतनृन्द्रोय यतग्रानतपार्जितम् । फल च तत्क्षणान्नून जायतेऽल्पयत्नत ॥
नित्य ग्रानवह्न्युपासित तपस्य महात्मन । पुण्यात्मा वहिशाटाश्च तत्कार्यकरणोन्मुखा

सन्तानायानि त्रिधा ब्रह्मविष्णुशिवान्त्य ।
गङ्गाद्या सरितश्चापि सागरास्सुपावका ॥

तपांसि कृच्छ्रयज्ञाश्च नियमस्त्वनिमाध्वसान् ।
नित्योपासननिनस्तस्मात्तीर्थचर्यादयोऽखिलाः ॥

धर्मास्ते यत्नसाध्याः कृच्छ्रसाध्यश्च केवलाः । कर्तव्यत्वेन विहिता न भवन्त्येव ते परम्
तत्कर्मासमर्थस्य बोधिता शास्त्रजालकैः । नित्यमग्नि विवाहेद्ध मेतं त्यक्त्वाऽपि यो जडः
समन्यं हि मनुते स शू ( ? ) शस्मृतः । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥
आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ।
तस्मात्तदाहुतिसमो धर्मोऽन्यो गृहमेधिनाम् ॥
नास्त्येव सुतरां लोके तस्मात्तदधिकः कथम् ।
एतादृक् कर्म सिद्ध्यर्थं ब्राह्मणस्य महात्मनः ॥
अन्यानि सर्वकर्माणि योग्यतापादकानि वै । सर्वाश्रमाणां गार्हस्थ्यं परमोत्कृष्टमुच्यते
तन्निष्ठः प्रहरेदाशु चित्तशुद्धिमुखेन वै । श्रेयांसि संपदस्तत्र सन्तोषस्सुखमुत्तमम् ॥
अनागतप्रत्यवायपरिहारोऽपि सूक्ष्मतः । प्रयासाधिक्यराहित्यं सर्वापभ्रंशसन्ततौ ॥
प्रायश्चित्तैकसौलभ्यं सर्वाश्रमनिवासिनाम् । सर्वोपकारकरणयोग्यतातस्समं न तु ॥
आश्रमान्तरमत्युग्रमतस्तं नित्यमाश्रयेत् । तदास्तां प्रकृतेः पश्चात्कुर्यादुत्तरसेचनम् ॥
अदिते पूर्ववत्प्रोक्तान्यमंस्था इति सर्वतः । द्वितीयमन्त्रेऽनुमते तृतीये च सरस्वते ॥
चतुर्थे देवसवितः परिषेचनहेतवे । पृथक् जलं प्रगृह्णीयान्न त्वेवं सकृदुद्धृतम् ॥
औदास्यान्नैर्ऋताग्नेयादथ नैर्ऋतमारुतान् । पश्चान्मारुतभूतेशात्तावदैन्द्रात्तु तुर्यके ॥
होमस्य पूर्वापरयोः कार्यं स्यात्परिषेचनम् । श्रितायामाहुतौ कुर्यादुत्तमं परिषेचनम् ॥
सर्वकर्मस्वेवमेव कार्यं विधिवदेव वै । अग्नेत्वमिति मन्त्रेण सुम्नायेति च मन्त्रतः ॥
स नो बोधीति च ततः उपस्थानं समाचरेत् ।
स्वस्तीति च वदेत्पश्चा दुपविश्याऽथ साञ्जलिः ॥
श्रद्धां मेधां यशः प्रज्ञां विद्यांबुद्धिंश्रियं बलम् । आयुष्यं तेज आरोग्यं देहिमे हव्यवाहन
इति मन्त्रं समुच्चार्य प्रणमेत च तं शुचिम् । नित्यमेवं सायं प्रातः वैदिको ब्राह्मणोत्तमः
अग्निर्देवो द्विजातीनां सूक्ष्मं हृदि तु योगिनाम् । प्रतिमा ह्यप्रबुद्धानां सर्वत्र समदर्शिनाम्

आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् ।
मननाद् ज्ञानमन्विच्छेत्तस्मान्मुक्तिं समाश्रयेत् ॥

न कर्मणा न प्रजया न धनत्यागेनोऽपि वा । तपसा केवलेनाऽपि तथा पुण्यशतादपि
ज्ञानं न जायते नृणां किंतु तच्चित्तशुद्धितः । सा चित्तशुद्धिस्तु तथा नित्यैर्नैर(?)वकर्म

नित्यानामपि सर्वेषां कर्मणां वैदिकं शुचि ।
श्रुतिश्च तादृशं प्रोक्तं विवाहो नैव नान्यथा ॥

स विवाहः पञ्चदीनात्मको मन्त्रैरुदाहृतः । स्वशाखानुगुणद्रव्यदानत्रयसदात्मकः

तस्मात्तत्तुल्लितोऽग्निर्विशेषो न तु देहिनाम् ।
औपासनस्तत्र जातो नित्योऽयं धार्य एव च ॥
मन्थ्यो भवेद्वनुगतः श्रोत्रियागारतोऽपि वा ।
आहार्यो विधिना भक्त्या उपवासोऽथवा पुनः ॥
गतस्यैव हि कालस्य सायं वा प्रातरेव वा ।
भार्यायाश्चाथ वा भर्तुः पर्वस्वेतेषु सर्वतः ॥
भवेद्द्रव्याहुतिहोमोऽपि सर्वचित्ताय सर्वदा ।
पाणिग्रहप्रधानाग्न्यहोमोऽयं यदि वै तथा ॥
मन्थ्यस्समाहृतश्चेत्तु पश्चान्मन्थ्याग्निरेव हि ।
सन्ध्या न मात्रे प्रभवेन्न चेच्छ्रोत्रियमन्दिरात् ॥
आहार्य एव प्रभवेत् एव स्यान्नित्यचोदना ।
तथापि मन्थनं तूष्णीं यत्र कुत्रापि दारुके ॥

कर्तुं न शक्यते विनु तद्विहस्यव(प) स्मात् । पूर्वमेव प्रयत्नेन शुदिने च सुलग्नके ॥

तन्नीयजनको भ्राता पितृव्यो मातुलादिकः ।
ऋत्विक्समन्त्र शिष्यगुरु तथात्यो यश्च वञ्चत ॥
रोहिण्यादिषु तारेषु जयापूर्णादिषु यकौ ।
भार्गवे गुरुवारे वा सोमे सौम्ये परे स्वके ॥

ग्रामात्प्राच्यामुदीच्यां वा संस्थिते कुञ्जराशने ।
शमीगर्भेऽथवा तस्य प्राच्यान्तरगता तु या ॥
शाखा तस्यां दृढं स्थूलमरणीकाष्ठमुत्तमम् । सार्धहस्तमितं छित्वा द्विधा विदलने क्षमम्
शनैर्निराद्रं कृत्वेमं कुर्यात्तदरणीद्वयम् । मधुपर्कात्पूर्वमेव पश्चात्तत्पाणिपीडने ॥
तत्काष्ठमन्थनं कृत्वा वह्निमुत्पाद्य तं स्थिरम् ।
तं योजयेद्विवाहेऽस्मिन्नग्निस्थापनकर्मणि ॥
एवं यत्नेन संस्थाप्य स्वीकृताग्नेर्महात्मनः । मन्थ्य एव सदा वह्निः प्रभवत्येव नान्यथा
यावदाधानिनो वह्निः सर्वस्मार्तेषु कर्मसु । अन्वाहार्यैक पचनो भवेदेव न चापरः ॥
निरौपासनतः पश्चात्तस्माद्गुण्यैक सिद्धये । अनाज्ञातत्रयजपं कुर्यादेव तथा पुनः ॥
इदं विष्णुश्च जाप्यः स्यात्तथा व्याहृतयः पुनः ।
पश्चाच्छुचेः षोडशोपचारानपि यथाक्रमम् ॥
समर्पयामीति पृथगुक्त्वा तस्य समर्पयेत् । सर्वमेवं च निर्वर्त्य तमिमं मन्त्रमुच्चरेत् ॥
यस्य स्मृत्या च नामोक्त्या तपोहोमक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
एवं तमिमुक्त्वात्र चरमेकं पुनर्जपेत् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ॥
यद्धुतं तु मया देव परिपूर्णं तदस्तु ते । इति जप्त्वा तस्य भस्म गृह्णीयाद्धारणाय वै ॥
बृहत्सामेति मन्त्रेण रक्षार्थं तद्भवेत् त्वरा । तृतीयदिवसे पश्चान्महदाशीः क्रिया शुभा

## शेषहोमः ।

शेषहोमस्तुर्यदिनापररात्रे विधीयते । गन्धर्वोद्वासनं कृत्वा चोदीर्ष्वातेति युग्मतः ॥
विशेषतस्तयोः पूजां कृत्वा ते विसृजेत्परम् ।
अग्नीन्धनादिकं कृत्वा चतुरन्ते ततः किल ॥
अग्नीत्यादिकमन्त्रैस्तैर्जुहुयादाज्यधारया । पृथक् जयादयश्चात्र भवेयुस्तत्परं पुनः ॥
कर्मोद्वासनतः पूर्वं पश्चात्ता पस्य मन्त्रकौ । भवेतां जपकार्याय दम्पत्योस्तयोः पृथक् ॥

अप्रचितान्न पुराम लोपये देव दानन । गृहस्थधर्मान्शो विप्रो परित्यजति शोभन
श्रुतिभिर्मनरसं नानिर परिकीर्तित । अविचोऽपि दशो यदि ॥
कुर्यात्पापदि सनारक ते हृदयेन वै । सर्वकृत्येषु शस्नदेव मर्यादधर्मान्समाचरेत्
बुद्ध्या स्पीड्न्य या वर्जित । वेदर्ज स्मृय उच्यते ॥
अनेकेषु सुधर्मेषु परयत्सु न भुजिक्रियाम् । समाचरेन्न मनुज रोगी तेन भवेद्यम् ॥
आचार्येषु श्रोत्रियेषु सत्सु गुरुष्वपि । कृतबुद्धिषु पश्यत्सु धकम् ॥

मित्रपङ्क्तिर्दत्पुत्रपङ्क्ति गुरुपङ्क्तिस्तथोऽधिरा ।
वर्धितपङ्क्तिरतुला भुञ्जते तत्र भक्तित ॥

नित्य कृच्छ्रफलप्रोक्त अल्ह शश्वतो तु सन्ततम् । सपाद तत्र कुर्यात्भुजिक्रियाम्

ते श्रोत्रिया महात्मान भुञ्जान पङ्क्तिपावना ।
तत्र महपापपङ्क्तिना पुनन्त्येरति सा श्रुति ॥

दुर्लभा श्रोत्रिया सोमयाजिनाम् । तत्तरामिचितापङ्क्ति तत्तरा ब्रह्मवादिनाम्

न ब्रह्मवादिपङ्क्तेस्तु शुचिशल्या हि विद्यते ।
भुक्तं रत्रा ब्रह्मविदा भिक्षुणा गृहिणापि वा ॥

णि महापापै प्रमुच्यते । अच्युतानन्तगोविन्द महादेवेशशूलिनाम् ॥

नाम्नामेतत्त्रय(यो,तया)श्चेद्भुक्ति कृच्छ्रसहस्रधा ।
मुख्यादी निर्णय्य पठनादेव पाप(नम्) ॥

पै प्रमुच्येत श्रोत्रियैस्त्रिभिभुक्तेन । सिंहानुवाक पठनाच्छ्रोत्रियैर्दशभिर्यदि ॥
मुक्तेरादावमनारान्मुच्यते ब्रह्महत्यया । शन्नो मन्त्र इति प्रश्न त्रयस्य पठने पुन ॥
पूर्व सत्याकं भ्रूणघ्नोऽपि विमुच्यते । तैरुचेद्वादशसरयाके वीरघ्नोऽपि विशुद्ध्यति
अवशाद्भुक्तिकालेषु यत्रस्त्रविदेकदा । उत्सवेषु ब्राह्मणाना बन्धूना ना ॥
मित्राणा सज्जनाना वा दीक्षामुख्यादिसङ्के । अपाङ्क्तय समायोगे ब्रह्मभोजनकादिके
स्मार्तकर्मणि वा श्रौते भुक्तिसङ्कटसम्भव । अग्निना भस्मना मेन सलिलेन वा ॥
प्रद्वारेणैव मार्गेण पङ्क्तेर्भेद समाचरेत् । अशने तेन कार्येण तस्माद्दोषात्प्रमुच्यते ॥
उदक वा तृण भस्म द्वारसन्धिस्तथैव च । प्रोक्तास्तै पङ्क्तिर्भिद्यतेऽत्र हि ।

एकपङ्क्त्योपविष्टानां विप्राणां सहभोजने। यदि कोऽपि बहिर्गच्छेन् नाश्नीयुरितरे पुनः
त्राशतां पञ्चगव्यं सद्यः स्नानात्परं तथा। अन्य ··· ··· भवेयुर्नात्र संशयः॥
भुञ्जानेषु तु विप्रेषु यदि पङ्क्तिं परित्यजेन्। तद्भुक्तविघ्नकर्ता स्याद्ब्रह्मेति निगद्यते॥
पक ··· जितकामकारेण सर्वदा। नै ··· शयानो ··· प्यकच्छकः॥

अकच्छः पुच्छकच्छश्च तिर्यक्कच्छोर्ध्वकच्छकः।
कच्छावलम्बि कच्छश्च पञ्चैते नग्नका स्मृताः॥

दृष्टतया धर्मपत्न्या सक्रोधक्रूरचक्षुषा। नाश्नीयाद्व ··· वीर्यहानिर्भवेत्ततः॥
अश्रीको जायते तस्य सूनुः श्रीविधुरो बलः। तस्मात्तथा नाचरेद्वै भोजनं धर्मवित्तमः

भुक्तिकाले कामबुद्ध्या नैववीक्षेत धर्मवित्।
जृम्भमाणां शयानां (तथाऽऽ) सीनां च पुष्पिणीम्॥

नेच्छयेन्मदगर्वाभ्यां तद्भिम्बोकादियष्चितः। प्रभवेदेव सततं स शृङ्गाररसो भवेत्॥

द्वावेव दम्पती गेहे स्यातां यदि तदा (बुधः)।
···पि ... धर्म या निष्ठो भवेद्रात्रौ रतिप्रियः॥
शास्त्रज्ञः शास्त्रवश्यः स्यात्कार्याकार्यविशेषवित्।
सदा निमीलिताक्षस्सन् न स्त्रीवश्यो भवेद(दि)ति॥

न गुह्यार्थं वदेत्तस्याः नैनां प्रद्वेषयेद(तः)। यस्मिन्काले यथासेयत्तस्मिन्काले तथा वसेत्
अङ्गारकसमा नारी घृतपिण्डसमः पुमान्। अतोऽत्यन्तं जागरूकः तत्स···सदा भवेत्
भुक्तिकाले नित्यमेव स्वपा ··· कल्पकम्। कुर्वीतैव प्रयत्नेन तस्याः स्वानेन तत्पतिः॥

सर्वमन्नं पात्रनिष्ठमकृत्वा भागकल्पनम्।
भुङ्क्ते मूढो धर्मपत्न्याः पश्चाज्जन्मान्तरेऽह्यसौ॥

··· पुं ··· स्याद्भार्या नूनं वदामि वः। भागकल्पनमेतत्स्यात्कुर्याद्गृहपतिः स्वयम्॥
यदिस्यात्तु तदा नो चेन्नायं विधिरिति श्रुतिः। ब्राह्मणेन तयाश्नीयात्तदुच्छिष्ट ···॥
···· पत्तदुच्छिष्टभुक्तौ रतेरन्यत्र चोदितः। रतावप्यधरस्तस्याः नित्यं स्यादतिपावनः
सताम्बूलैकविधुरः चण्डालोच्छिष्टसन्निभः। ताम्बूल ·· भ···लवङ्गेला···सितः

-- --  राज्ञोऽभिषेकदिवसः स्मृतश्चेत्तदहः परम् ।
तस्मिन्स कुर्याद्विधिना तदिष्टारण्यं सुभोजनम् ॥
अत्यन्तलाभो यस्मिन्स्यात्तस्मिन्नहनि तादृशे । नामकेति प्र ··· तादृशं चरेत् ॥
भोजनं तु न विशेषं कुर्यादिति विचक्षणः । प्राहुरेव महात्मानः द्वितीयाश्रमसंस्थितः ॥
भुक्तिपात्रे यथा लेपा भवेयु ··· । तल्लेपकामाः कामाद्याः तेषां तृप्त्यै तदाचरेत्
स्वान्नभुक्तौ तथा कुर्यान्नान्यभुक्तौ कथंचन । न तथा करणंयुक्तं भुक्तिधर्मास्स्वकेगृहे
यथेच्छया ···· च्छया । दुर्गतोदन ··· तु किंचि ··· तु ॥
तत्र वस्तुपरित्यागे दुर्गतो दुःखितो भवेत् । बन्धुमित्राश्वगेहेषु भुक्तिकालेषु वस्तुना ॥
रति त्यागेऽपि ··· । श्राद्धभुक्तौ विशेषाय शास्त्रदृष्टः सनातनः ॥
सर्वंसशेषमश्नीयाद्घृतपायसवर्जितम् । मधुदध्नोर्विकल्पोऽत्र कथितो गौतमादिभिः ॥
न पिबेन्नचभुञ्जीत द्विजः सव्येन पाणिना । (वामह)स्तेन च तथा शूद्रानीतजलं त्यजेत्
अवशात्तेन संस्पृष्ट पात्रगं सलिलं तथा । दूरात्परिहरेत्सद्यः तादृशं क्षालयेच्च तत् ॥
घृतमादौपरिग्राह्य भुक्ति···मया···वयेत् । घृतेन विद्यते तृप्तिः पिबेत्पात्रान्तरस्थितम् ॥
एकधारानिपतितं द्रव्यवस्तु परित्यजेत् । पात्रान्तरात्तत्स्वीकार्यमन्यथोच्छिष्टभोजनः ॥
प्रभवेयुर्हिनिखिलाः तत्पङ्क्तौ येऽस्थितास्तुते । शिष्टपात्रगतंतच्च दूरात्त्याज्यं मनीषिभिः
पीतशेषं पिबेन्नैव परस्य स्वस्य वा जलम् । उच्छिष्टमेव विज्ञेयं भोजनं मुखमारुतात् ॥
पिबतो यः पिबेत्तोयं तत्तोयं तदनन्तरम् ।
पिबतः पङ्क्तिमध्येषु संत्याज्या निन्दितास्तु ते ॥
मुखमारुतदुष्टान्नस्थलपात्रे पुटादिकम् । उच्छिष्टं निखिलंज्ञेयं न ग्राह्यं तादृशं हि यत् ॥
तत्पिबेद्यदिमोहेन द्विजश्चान्द्रायणंचरेत् । पञ्चगव्यं च विधिना तद्दोषस्य निवृत्तये ॥
पाणि पाणि तलाग्रैर्वा ब्राह्मणो न पिबेत्क्वचित् । सुरापानेनतत्तुल्यं इति सर्वे महर्षयः
न मुखेन पिबेत्तोयं तदानाञ्जलिना क्वचित् । तथैव वामहस्तेन न धाराभिः कथञ्चन ॥
उद्धृत्य वामहस्तेन यः पिबेद्ब्राह्मणोजलम् । सुरयातज्जलंतुल्यं न त्वे(पे)यमिति सन्ततम्
न वास उदकंवर्षं सलिलं सन्ततोदकम् । उद्घाटितं जलंवापि न स्वीकुर्याद्द्विजोत्तमः

कराद्वापिकोम्भवा मन्दिर शूद्रहस्तेन । समुद्धृतेन क्षुद्रेण शाप्रसृत द्वरेण तु वा ॥
न स्पृशेद्देवनित्य तदस्पृश्य शूद्रयागत । कदाचिद्यदि पर्युनर्मृदोत्मर्जनशुद्धये ॥
अथवातन्नकरते सम्युद्धिशुद्धिसूत्रम् । स्पशनात्तस्य नीरस्य माह्मणस्य विनानत ॥
सचैल स्नानमेवस्यात पादस्पर्शनसमवे । अथवाऽन्मागमध्ये तु न स्नान किंतु पादयो ॥
शुद्धोदकप्रक्षालनस्यात्सद्दापविनिवृत्तये । पादप्रक्षालन नित्य शुद्धेनैव हि पयसा ॥
प्रयत्नेन प्रयत्नेन नाशुद्धेन कदाचन । शूद्रोदकपरि(त्यज्य)चूर्णताम्बूलकारणात ॥
न स्नीराय शुद्धिरूप स्वीकारे पञ्चगव्यम् । सौवर्णे राजते ताम्रे कांस्ये लोहमयेऽपिवा
सम्पर्कदोषो न भवेत्तोयपूर्ण( घटे यथा ) । ब्राह्मणेशुद्धिपूर्वेण यावत्सलिलपात्रक ॥
तावच्चण्डालादि सामीप्यादिस्पर्शो न विद्यते । भोजने निरते यस्य नलपानो भवेद्यदि
दूरविन्यस्तपात्र स्यान्नित्य मूत्रपुरीषयो । स मन्त्र प्राक्षितेर्नीरैरपि प्रक्षालितेऽपिवा
मोहन भोजनकुर्यात पुन स्नानेन शुध्यति । अमन्त्र मण्डलस्थे चेद्भाजन यदि वाडव
करोतिभुक्तेपुरत अन्नगिशतिसत्यया । अभिमन्त्र्य जलहस्ते सावित्र्या प्राशयेत्स्वत
सन्ध्यादि कमयायोग्यो न भवेदेव तत्परम् । भूमौ संस्थापितेपात्रे यन्त्रिशाया महीतले
यद्वाया वामहस्तेन पात्रमुद्धृत्य भोजयेत । लवण व्यञ्जन चैव घृत तैल पयो दधि ॥
लेह्य पेय च चोष्य च हस्तेन्न परिवेषयेत दर्व्यादिव घृतादिरया समस्त व्यञ्जन तथा
उदक यन्पश्नान्न या दर्व्यादातुमिच्छति । स भ्रूणहा सुरापश्च स स्तनो गुरुतल्पग
चण्डालमुख्य सूति श्वानकुक्कुरासभाव भुञ्जानो यदि पश्येत्तु तदन्न सपरित्यजेत
नेत्रशीटावपन्न च सु गु)श्वमारुतवीजितम् । अन्न तत्रापि नित्य स्यात्तस्मात्तत्परिवर्जयेत

चण्डालपतितोदक्या सूतिकामन्त्यजौ (१)।
हिंमस्त्रश्च राजौर्वा तथा शृगालश्चासि वा ॥

भुञ्जीतमासमात्र तु दिनमेकमभाननम् । तपीडितस्तन्निषिद्धान्नैस्साकन्निगलेत्सन् ॥
तद्गृहस्थवनिवसन तद्गुणा नि नाडिन । तत्रैव जलपानादि करणात्प्रायश्चारणम् ॥
कुर्वन पश्चात्तु कालेन मुक्तश्चापाप्रमन्नने । अनुज्ञया ब्राह्मणानां दक्षिणादानपूर्वत ॥
तत्त कालानुगुण्येन तत्तद्श्च शतगुण्यत । शतादिस्नानकरणे पुन सत्कारकर्मना ॥

घेनूनांदक्षिणाभिश्च गव्यानां प्राशनात्परम् । निष्कृतिर्विहितासद्भिः न चान्येनैव वर्त्मना
यच्चपाणितलेदत्तं यत्तु फट्कारसंयुतम् । प्रसृताङ्गुलिभिर्यच्च तस्य गोमांसवच्चरेत् ॥
शब्देनापः पयः पीत्वा शब्देन घृतपायसौ । शब्देनापोशनंपीत्वा सुरापानव्रतं चरेत्
हस्त्यश्वरथयानोष्ट्र स्थानेषु न चरेद्भुजिम् । चण्डालवाटिकाराद्वा राजकस्थानतोऽपि वा
श्मशाननिकटेवापि न कुर्यात्तद्भुजिक्रियाम् । शयनस्थो न भुञ्जीत देवालयगतोऽपिवा

नार्द्र वासा नार्द्र शिखः न च यज्ञोपवीतवान् ।
नैकवासा न नग्नो वा नापि कच्छावहिष्कृतः ॥
विवदन् बहुभापीसन्न कुर्वीत भुजिक्रियाम् ।
अन्तः श्यावग्राममध्ये सन्धौ सान्ध्यद्वये तथा ॥

चतुष्पथे निरुद्धस्सन्न कुर्याद्भोजनं सदा । द्विवाद्विभोजनं वापि यामिनीभोजनद्वयम्॥

न कुर्याद्ब्राह्मणः स्वस्थः कुर्याच्चेच्चान्द्रकृद्भवेत् ।
परिवेषणतः पश्चाद्गायत्र्या प्रोक्ष्य चोदनम् ॥

परिषिच्य च सत्येन पुष्करेण ततः पुनः । स्वीकृत्यापोशनं तेन सत्यं त्वामनुना भुजिः

सदा द्विजानां विहिता प्राणाहुति कृतेः परम् ।
अभिधारितभिस्सायाः परिषेचनिकक्रियाः ॥

प्रकर्तव्या ब्राह्मणेन नित्योयं विधिरुच्यते । परिषेचनतः पश्चात्तदन्नमभिधारितम् ॥
शुनोच्छिष्टमितिज्ञेयं तस्मात्तत्परिवर्जयेत् । घृतेनैवाभिधारः स्यात् घृताभावे तु केवलम्
तैलेन वा प्रकुर्वीत यदि तस्यापि दुर्लभे । पयसा तत्प्रकुर्वीत तस्यापि यदि दुर्गतौ ॥
दध्ना तक्रेण वा सर्वाभावे तु सलिलेन वा । अभिघारः प्रकर्तव्यः तथान्यन्नैव भक्षयेत्
तदुत्तमं गव्यमेव माहिषं मध्यमं परम् । अजस्यापि तथैवस्यादाविकंत्वधमाधमम् ॥

सर्वाण्यन्नानि गव्येन युक्तानि यदि तानि च ।
उत्तमत्वेन चोक्तानि दध्यादीन्यपि पण्डितैः ॥

सन्ततंभुक्तिकालेषु यदि पत्राणि भुक्तये । स्युस्तेषु पूर्वमाज्येनाभिधारो विधिचोदितः
सौवर्णे राजते कांस्ये नाभिधारो मनीषिभिः । कर्तव्यस्तेन विहितः सोऽयं वर्णोप शम्यते

दीपयेदेव ···· शमनाय न चेन्महान् । अपमृत्युः प्रजायेत संपदोयान्त्यधोगतिम् ॥
सजोषा इन्द्र सुमहामन्त्रमेतं तु जृम्भणे । शतवारं जपेद्विद्वांस्तद्दोषस्तेन नश्यति ॥
मूत्रस्य स्खलनेजाते भुक्तिकाले तु दैवतः । पुरीषस्य च तत्पश्चात्स्नात्वाचम्य विधानतः
अन्नत्यागात्परंसद्यः स्यक्तवापोशनमुत्तरम् । जपित्वाहं स गायत्रीमष्टोत्तरशतं ततः ॥
पूर्षसूक्तजपात्पूतो भवेदिति यमोऽब्रवीत् । अमृतेति च मन्त्रेण ध्रु त्तरापोशनात्परम् ॥
पीतार्धपयसानित्यं नारकान्दोपयेन्नचेत् । ध्रु वंते प्रशपन्त्येनं नारकाः जलकाङ्क्षिणः ॥
पुरातेषां सुरज्येष्टः पिपासाशमनाय वै । सलिलं कल्पयामास भुक्तयन्तेऽत्रद्विजन्मनाम्
पीतार्धं तादृशं ब्रह्मा पीयूषादधिकं परम् । कारवेति च मन्त्रेण तद्देयं तर्जनीमुखात् ॥
अग्राद्वाङ्गुष्ठयोगेन तेनश्रेयो महद्भवेत् । भगिनीजननीभार्या स्नुषापुत्र्यपि हस्ततः ॥

शस्यतेऽनुदिनंभुक्तिः मित्रैरिष्टैश्च बन्धुभिः ।
अन्नार्थिभिः क्षुदार्तैर्वा भुक्तिवस्त्वैककामुकैः ॥

समीक्षितरसन्कुर्यान्न भोजनं सर्वथा नरः । यत्कांक्षितं वस्तुभुक्तौ स्वयमश्नाति भोजने
त ···· दत्वैव तस्मैना तज्जीर्णं नैति किं पुनः । पिचण्डसंस्थितंतद्धि विषमेव भवेद्ध्रुवम्
पचनं प्राङ्मुखकृतमुदङ्मुखकृतं तु वा । देवयोग्यं भवेत्सर्वं न चेदासुरमुच्यते ॥
पाचकं नित्यपाकाय स्वकीयं परिकल्पयेत् । यदि न स्यात्स्वकेगेहे दैवादग्निस्तदापुनः ॥
श्रोत्रियागारतोग्राह्यः श्रोत्रियस्यत्वसंभवे । सामान्य ब्राह्मणगृहात्तादृशस्याप्यसंभवे ॥
कुग्रामे कुत्सितेदेशे शूद्रगेह समाकुले । तद्गृहादग्निमादाय भूमावेकत्र तं शुचिम् ॥
एधयित्वान्यत्रभूयः यैः कश्चित्काष्टजालकैः । शुष्कैस्तृणविशेषैर्वा प्रज्वाल्यैनं विभावसुम्
तस्मात्संगृह्य भूयश्च कृत्वैनं बलवत्तरम् । चुल्लिकायां प्रतिष्टाप्य तेन पाकादिकक्रियाम् ॥
साधयेदेव विधिना यदि देवालयादिना । तत्समाहरणंकुर्यात्तदा तूष्णीं न चाहरेत् ॥
दत्वैव किंचित्क्रमुकं फलं ताम्बूलमेव वा । शलाटुतण्डुलान्वापि पश्चाद्वह्निं समाहरेत् ॥

तथागतेभ्यो बुद्धेभ्यो जिनेभ्यो नैव सर्वथा ।
देवलेभ्यो विशेषेण कुण्डादिभ्यो न तं हरेत् ॥

पाणिना मथितो वह्निः अयोदण्डेन वा तथा । विषवृक्षादिसंभतः श्मशानाग्निमयोग····

औपासनाग्निपाकेन यदन्नं मोहतः कृतम् । दैवाल्हंभवेत्तद्धि तादृशी पचनक्रिया ॥
तन्तुभत्यादिनायाणा तदम्पत्यो पुनन्वेत् । तत्पैतृकक्रियाणां स्यान्नान्येषामिति निर्णयः

औपासनाग्नौ पचनमुक्तिस्तत्त्वाय सन्ततम् ।
कात्यायनमतानास्यादित्येव हि व्यवस्थिति ॥
अन्यौपासनपक्वान्नमन्यस्य प्राशने वृथा ।
प्राजापत्यं प्रकथितं तस्मात्त न तथा चरेत् ॥

औपासनान्न तद्ब्रह्ममात्रमपर महात्मभि । सप्राश्यत्वेन कथितमाग्नेयादिषु कर्मसु ॥
तद्धनिर्गतताथाय कदाचिन्नोपपद्यते । तस्मात्पाकक्रियानित्यं लौकिकाग्नौ द्विजन्मनाम्

कर्तव्यत्वेनविहिता सोऽग्नि साधारणः परः ।
तादृशनाग्निना नित्यं दीपपाकादिका क्रिया ॥

गृहमेधी साधयीत न गार्ह्यैणेनि सूनदृन । भास्कराद्यग्न्यन्येषु नित्याग्निसलिलेषु च ॥
रम्भास्करनीयेषु गृहेषु श्रीनमुच्यति । तामसमानासुरान्शाकान्न कुर्यात्तु कदाचन ॥
तथैव सूपमन्नं वा न दैवात्ताश्शाम्मुचेन । फलमूलानि पत्राणि नैश्मृनाशामुसैस्तथा॥
स्वपिष्टतानग्निशामनमुग्नैवा तामसानि हि । तथा तन्मुखपक्वानि सर्वाण्यन्नादिकान्यपि
आसुराणीति विद्धि ह्यानीति स्वभूर्विभु । अफगारिस्लभूयश्च तेषां पकात्पर पुन
सभारचूर्णयोगस्य पूतमतति लाघनाम । भवनार्थक्रियाकार्या साफलीकरणादिभि ॥
शून्य वर्गिभमायानण्ड नन्नाज्य मुख्नापिनै । मन्त्रपण विशायण तत्क्रिया करणात्परम्

निशायित तन्मलिन पुन कीलालयोजनम् ।
कृत्वा त्रुरूप सभार मम्यक चूर्णनिपातनात् ॥
श्रागैन्य रुशायन्तन यन्पक्व क्रियते हि तत् ।
शाकालामर मवर्णा दनिस्स्या परशिरम् ॥

न चन्व शारपारा गच्मानात्र मगश गक्षमा निग्मिलालोक तामसरघेति गौतम

भनिनास्त मायग्णन्ता र्भुस्नराल्ममनिभा ।
रन्नाना घम्नान्दु यहनताऽमी भवन्ति हि ॥

तम्मात्तत् कनशारास्त रयाग्या रदारन । भवयुरव निनरां तादृक् पक्व तन्मयजेत्

सुपक्वं सुन्दरं दृष्टिप्रियं जिह्वाप्रियं शुचि । देवयोगमितिप्रोक्तं सर्वशाकादिकं सदा ॥

अतितप्तेषु नीरेषु त ··· ला ··· लनार्जुनान् ।
क्रियते पातयित्वा यः पाकोराक्षस उच्यते ॥

देवयोग्यो भवेन्नायं पितॄणामतिनिन्दितः । तेन हव्यं कव्यमपि न कुर्यात्पिण्डतः सदा
···· नोदकेन पैतृकं ये प्रकुर्वते । निरयस्था भवन्त्येव यावदाभूतसंप्लवम् ॥
प्रक्षाल्य तण्डुलान्सम्यक् त्रिवारं हस्तलोडनैः । तस्मिंस्तेनोदकेनैव पाकं कुर्यात्सुपात्रकः
सपा ··· दृशो देवयोग्योऽत्यन्तसुपावनः । तदन्नममृतसमं पितॄणां चातिवल्लभम् ॥
भवेदेवेति भगवानुवाच स पितामहः । सूपस्य नायं नियमः तप्तेष्वेव पयस्सुवै ॥
तस्य पाकः सुविहितः परंपाकात्पुनः स्मृतः । अत्र सैन्धवनिक्षेपः पूर्वं तस्मिन्कृते तु सः
पाको भवेत्समीचीनः तस्मात्तं परिवर्जयेत् । एवमेव तथा शाकविशेषाणां सदातनः ॥
नियमोऽयं प्रकथितः पाककर्मणि सन्ततम् । शाको लवणयोगेन यस्सुपक्वो भवेन्ननु ॥
तस्य पाकात्परमयं कार्य इत्येव निश्चयः । भिस्सासैन्धवयोगेन होमकार्ये समागते ॥
निन्दितैव भवेन्नित्यं हविर्मात्रं तथैव हि । यदि प्रथमतो मोहादमत्रे सैन्धवे तथा ॥
निक्षिप्ते दूरतोऽमत्रं क्षालयेत्सद्य एव वै । न चेत्तत्परतो यद्वद्वस्तु स्यात्परिवेपितम् ॥
अयोग्यमत्तुं प्रभवेत्सतामेतद्विगर्हितम् । यद्यपि स्यात्तुलवणं रसानामाद्यमुत्तमम् ॥

तस्य ज्येष्ठा देवता सा या पुरा सागरोद्भवा ।
पत्नी प्रजापतेः साक्षात्तद्योगात्सोऽपि कर्मसु ॥

संवभूवुर्हि तूर्णीं ···· योऽयंद्विजोत्तमैः । श्रुतं ··· (प्रा) जापत्यं भजत्यहो ॥
दैविके वैकृते वापि सति कर्मणि सैन्धवम् । तस्मादन्य द्रव्ययुक्तं कृत्स्नात्तु परिवेषणात्
परमेवास्य कर्तव्यं भुक्तमध्येऽथवा सदा । प्रत्यक्षलवणत्यागी भुक्तिकाले द्विजोत्तमः ॥
नित्योपवासो विज्ञेयः ब्रह्मचारी जितेन्द्रियः । सर्वतीर्थव्रतपरः सत्यवाक् सर्वधर्मकृत्
अष्टादशतुलाद्रव्यक्रमस्यान्ते निरूपिता । तुलेयं सैन्धवीभूयो दशदानक्रमस्य च ॥
अन्ते निरूपिता ह्य तल्लवणद्रव्यमित्यपि । तस्मादखिलवस्तूनां कृतेऽस्मिन्परिवेपणे ॥
अन्तेऽन्यद्रव्ययोगेन कार्यं तत्परिवेपणम् । द्रव्यान्तरस्य योगेन सा लक्ष्मी लज्जितातराम्

तिरस्कृता तु सिता च दूरादपगता भवेत् । भार्गवी सर्वधान्येषु धनराशिषु तिष्ठति ॥
सन्तत छदने ज्येष्ठा सदावास करोति हि । तस्य निक्षेपण पात्रे वामपार्श्वे प्रचोदितम्
दक्षिणे परमान्नस्य प्रागग्राभिमुखे पुन । परिवेषणकाले तु तन्निक्षेपणमुच्यते ॥
अन्नस्य दक्षिणे भागे सूपस्थान प्रचक्षते । शाकानामपि सर्वेषां पक्वानां परिवेषण ॥
मिथोयोगो यथा न स्यात्तथा पात्रे प्रसाधयेत् । सूपमन्नेन सपृक्त य कुर्यात्परिवेषणम्
स सूत स्याद्दृष्टजन्म तस्मात्तत्परिवर्जयन् । पैतृकेऽप्याढकाख्येन सूपेन जडधीर्नर ॥
द्विजान्सन्तर्पयेद्बुध्या नास्तिक्ये जायते नर । दैवकृत्येषु सर्वेषु मुद्गमूषा विकल्पत ॥
प्रशस्त स्यात्परिग्राह्य पैतृकेषु व्यवस्थित । शुभकर्मसु सर्वत्र सूप आढक नामक ॥
चणकाश्च परिग्राह्या तस्मिन्नर्थे क्वचन ।
माषा सूपाय य कुर्यात् भक्ष्यकार्येषु मूढधी ॥
क्षीयन्ते सपदस्तस्य प्रजाश्च पशव श्रिय । भक्ष्यकृत्येषु सर्वत्र निन्दिता न भवन्त्यमी
माषास्तिलास्तथाभक्ष्या महायज्ञेषु घोमता । दैविकेष्वखिलेष्वपु पैतृकेषु शुभेष्वपि ॥
कदलीचूतपनसा पयोदधिघृतान्यपि । गुडनैक्षुशाथीरसमित्ताम्बूलदक्षिणा ॥
साधारणनाख्यगश्च गोमय च तथा पुन । कर्ममात्रस्य सतत सतर्पुसलिल सदा ॥
साधन पावन प्रोक्त सलिल तथा शुभम् ॥

## पाकाधिकारिनिरूपणम्

पत्नीपाक प्रशस्त स्यात्स्नाथत्यनयोरपि ।
पितामह्यादिकाना च ज्ञातीनामेव साधिक ॥
मातुरा सुराना च बान्धवाना च कृत्स्नश ।
स्नान तुगुण्यन चरित्रन ॥
प्राशस्त्य पाककार्यस्याहीक्रिये वैदिकेऽपिवा ।
स्थालीपाकादिमत्कृत्ये नित्य तच्छ्रणादिकम् ॥
हस्तावहनन नस्या मयाप्य विधिना यथा । दैविके पैतृके तस्मिन्पचने सर्वकर्मणि ॥

अधिकारो मुख्य एव न तत्साम्यं कथंचन ।
अन्यानप्राप्नुवन्त्येव तत्साम्योक्तिस्तु तत्र चेत् ॥
अर्थवाद इति प्राहुः तत्तत्त्वज्ञा महर्षयः । चिरण्टिनीकृतः पाकः परमो ह्युत्तमोत्तमः ॥

## स्त्रीधर्माः

शुचिः सुमङ्गलीभव्या भव्यानामादिकारणम् । श्रेयसां संपदां मूलं श्रियां सैवास्पदं परम्
साक्षात्सरस्वती देवी गायत्री साप्यरुन्धती ।
शची रमा भगवती कल्याण्यार्या मनोन्मनी ॥
तस्यास्तु पतिशुश्रूषा परमो धर्म उच्यते । श्वश्रूः श्वशुरपूजा च सततं मञ्जुभाषणम् ॥
अर्थीप्रियत्वं बन्धूनां क्रियारञ्जनम(प्य)ति । सदा शुचित्वमश्लीकवचसां परिवर्जनम् ॥
संपच्छ्रीकरवाक्यौघं यथार्थपरिभाषणम् । सदा संमुखतातुष्टिरुपांशुपरिभाषणम् ॥
स्मिताभिभाषणंस्वाभिः प्रजाभिर्मन्त्रबुद्धिभिः ।
क्रोधनिष्ठुरवाक् प्रोक्तौ गुरुभिस्तैः पतिप्रियैः ॥
विकारशून्यता चित्ते क्रोधलोभादिशून्यता ।
अनालस्यं कालमात्रे पतिच्छायानुवर्तनम् ॥
पतिव्रता लक्षणं स्यादाचारश्च तथाविधः । स्नानमात्रे प्रकथितं हरिद्रा प्राङ्मुखेन वै ॥
कर्षणं लेपनं चापि लपनस्यादितः स्मृतम् । हृत्कण्ठकर्णबाहूरु जान्वङ्घ्र्यादि क्रमेणतु
स्नानमाकण्ठमेवस्यादजस्रं शिरसो नतु । विशेषदिवसेष्वेवावगाहः प्रतिपादितः ॥
रात्र्या त्यक्तंतु यत्स्नानं वृथा तासां न संशयः ।
भवेदेवेति सा स्वाहा स्वधां प्रोवाच संसदि ॥
र्पणात्परमेवेयं निशांदद्यात्क्रमेण वै । चतसृणां दिशामादौ सेनादीनां ततः परम् ॥
सर्वासां देवपत्नीनां दद्यादङ्गुलिचालनात् । पर्वसुप्रोक्तमेतासां पैतृकेषु दिनेष्वपि ॥
ग्रहणेषु विशेषेणाप्यर्धोदयमहोदये । तस्यां कपिलषष्ठ्यां च श्वश्रूश्वशुरयोस्तथा ॥
मृताहे सूतकाशौचरजस्कालेषु चोदितम् । चिरण्टीनां शिरस्नानं शास्त्रज्ञैस्तैर्महात्मभिः

पुण्यतीर्थेष्ववभृथे चण्डालाद्यशुचौ तथा । उच्छिष्टपतने शीर्षे बन्धुमात्रमृतावपि ॥
श्मशानपृथ्वीगमने गमनादिनिमित्तके । भवेदेव शिरः स्नान [illegible] ॥

चीना निमित्त यो मोहात्कुरुते मज्जनं रमा ।
पतिघ्नी सा प्रकथिता विधवा जन्मजन्मनि ॥

भवत्ये [illegible] प्राह धर्मप्रोक्तो पुरा विधिः । अचिरा [illegible] मज्जनात्परमेव वै ॥
निशिलान्केशानमकुर्यात्स्वरीं शिवाम् । न भवेदार्द्रवस्त्री नार्द्रवस्त्राप्यकञ्चुका
सत्यकतकुङ्कुमादिव्यसिन्दूरचलुलेपना । प्रभवेदेवमतत स्त्रीकृताञ्जनपाणिका ॥
सचरेदुत्तरीयेण पादप्रक्षालनात्परम् । आचामोऽपि भवेत्तूर्णी जलप्राशनमात्रतः ॥

नामाचमनमित्युक्तं विधवाना च न त्रिभिः ।
नामभि कथितं सद्भिः नान्यैरेवेति काश्यपः ॥

उदयानन्तरं स्त्रीणां स्नानं तत्परिकीर्तितम् । तद्वत्सोमपीथिन्या उदयात्पूर्वमेव वै ॥
बहुधा दूरणतः पूर्व कार्यमेवेति चोदितम् । अग्निहोत्रप्रचारे कालेष्वेवायमुच्यते ॥
विधि [illegible] विशेषेण न चान्नाय विधिर्भवेत् । याऽऽर्द्रवस्त्रेण कुरुते पचनं दुर्मती रमा
तदन्नं तामसं ह्येव नैऋत न तु [illegible] । अनभ्युक्ता कृत स्वन्नं इत्यसौऽस्तीति गौतम

कर्त्या मार्द्रया मूढा कुर्यात्पाकं कृपायता ।
तदान्नं समश्नाति यातापी निर्घृणोऽसुरः ॥
अन्नदु स्वन या नारी मुक्त्वाल्पश्रुणि मूढधी ।
कराणि पक्वा ता भिक्षाचरण्ये निर्जने गुहाम् ॥
ग्रभाणामपि कालाना यथा स्वाद्य भवन्तु ।
तथा यजेयत्न तान्श रोदन नरः ॥
यान्नानि हि विधिवत पञ्चगव्यविधानतः ।
पीत्वाऽष्टवार जप्त्वा वा गायत्रीं वेदमातरम् ॥

मिष्टान्नवास्पन्नाच्छुद्धा भवति नान्यथा । शयाना या प्रकुरुते पाकमन्नस्य दुर्मतिः
अलक्ष्मीशा तदन्नं स्यान्मनामेतद्द्विरहितम् । तादृगन्नप्राशनेन मानवो दुर्भगो भवेत्

तद्दोषपरिहाराय शान्तां तामृचमुत्तमाम्। जपेदष्टशतं स्नात्वा तेन श्रीको भवेद्यम्॥
दक्षिणाभिमुखात्प्रत्यङ्मुखतो याति मौढ्यतः। पचत्यन्नं तत्तु भवेत्पैशाचं राक्षसं परम्

पितॄणामपि देवानां अनर्हः स्यात् द्विजन्मनाम्।
तदन्नं मनुजोऽतीव विद्यालक्ष्मीवहिष्कृतः॥
प्रभवत्येव तच्छान्त्यै चोपशान्ति जपेन्मनुम्।
त्रिवारं प्राङ्मुखस्तिष्ठन् व्याहृतीर्दशसंख्यया॥
व्यस्तास्समस्ता विधिवदन्त ओं तत्सदित्यपि।
उक्त्वा समापयेद्विद्वांस्तस्मादेव पतिव्रता॥

सुमङ्गली महाभागा सर्वलक्षणमण्डिता। यथोक्तविधिना स्नाता सुवस्त्राकञ्चुकावृता
कुङ्कुमालङ्कृतास्विन्नमुखी कवरसंवृता। अथवा कृतवेणी वा प्राङ्मुखेनैव सुस्थिता॥
विचक्षणा पाककर्म पाथ (च्छा) शास्त्रवर्त्मना। सर्वकर्मसु भद्रेषु सन्ततं ह्युत्तमोत्तमः
सुमङ्गलीकृतः पाकः सर्वशास्त्रमतः परम्। ततोऽपि सोमपीतन्याः पाकः पण्डित संमतः
परिवेषणकर्मापि तथैवेति शची जगौ। पचने भोजने वापि चिरण्टीनां क्षुते तथा॥
जृम्भणे पानवायौ वा निर्गते वेश्ममध्यमे। कल्याणवेदिकामध्ये तत्कालेष्वेषु दैवतः॥
तत्फलं तत्क्षणेनैव प्रोक्षयित्वा शुचीवतः। सद्यः संभूतेन पश्चाद्गोमयेनोपलिप्य वै॥

गास्तत्र तु समानीय नैचिकी रथ वा पुनः।
धेनोः सवत्साः गाः शुद्धा त्रयोऽश्वा वा विधानतः॥

मुहूर्तं तत्र संस्थाप्य तावद्गोसूक्त शब्दतः। पूरयित्वा सैन्धवाश्चेत्तावदत्राश्वसूक्ततः॥

शब्दापयित्वा विधिना मुहूर्तत्रयतः परम्।
दूरीकृत्याथ ताधेनो स्ता ··· श्वान्चेत्समाहितः॥

प्रादेशमात्रमवटं तत्र खात्वा यथा शुचि। यावत्तावत्तु तां सर्वां मृदं दूराद्व्यपोहयेत्
व्यपोहनात्ततो भूयः तैरेतैर्निखिलैर्द्विजैः। संवृतः पुनरागत्य पूरयित्वा वटं च तम्॥
तत्र दर्भान्दिग्पूचीनाग्रान्क्षिप्त्वाह्यक्षतैः शुभैः। कुङ्कुमाक्तैः सुपुष्पैश्च तत्र कुम्भं दृढं शुभम
स्थापयित्वाऽत्र वरुणमावाह्याथ त्रियम्बकम्। तन्नारिकेले संपूज्य प्रतिमायां विधानतः

षोडशैरुपचारैश्च समाराध्य जगत्पतिम्। पूजान्ते रुद्रगायत्रीं दशवारं द्विजै सह
जप्त्वा श्रीरुद्रचमकौ तत्पर तज्जलेन वै । अवटक्षिप्तमृत्नाया पूरयेदेव सर्वत

तत पर च श्रीसूक्त भूसूक्त पूर्वसूक्तकम्।
रुद्रमीसूक्तं च यत्नेन जापयित्वा द्विजोत्तमै ॥
दशशान्तिर्घोषशान्ति जप्त्वाऽथ प्राङ्मुख स्वयम्।
उपवीति नमोब्रह्म परिधानीयका जपेत्॥

तत्पातनतद्वायो निष्कृति कथिता परा। कृतस्य जृम्भणस्यापि पूर्ववन्नान्यथेति
भृगुवारे भौमवारे भानुवारेऽपि पर्वणि। महेषु सुमहत्स्वेषु माकरे क्रान्तिशुल्यके

विवाहव्रतोपनीति सीमान्तादिषु योगिषु।
तच्छालायां वेदिकाया तन्नान्दी करणात्परम्॥
अलंकारासनेतस्मिन्महासिंहासनेऽपि वा।
भद्रासने वा विधवा पान्थ(या)हैवेन शब्दित ॥
तदा तां निष्ठुर वाक्य प्रोक्त्वा क्षुत्कृत्य दूरत ।
उद्धामयित्वा चपल शुचीभो हव्यमन्त्रत ॥
गोमयलेपन कृ वा गोमन्त्रेण तत परम्।
तां भूमिं प्रोक्ष्य गावध्या मर्दम क्रिया मात्रत ॥

कारयित्वाविधानेन पुनस्तस्मिन्न कर्दमे। पञ्चगव्य पूरयित्वा तत्तन्मन्त्रेण मन्त्रवित्

तस्मिन्नथाक्रमध्यास्य अश्रीऽसीति च मन्त्रत ।
मन्त्रयित्वा पञ्चवारमिह पर्यन्तमेव वै ॥

यद्बन्दादिपडविंश ऋचो नत्वा तत पुन । हुत्वा च समिदन्नाज्यै स्विष्टकृत्परमेव
प्रोक्षोद्वासनपर्यन्त कृत्वा तां मृत्तिकां शुचि । कर्दमत्वेन सर्वत्र खनित्रेणैव कृत्स्नश
समुद्धृत्यैव नि शेष दूरत परिवर्जयेत् । पर्यण भस्मना पश्चाद्विकिरेत्तत्र सर्वत ।

नयप्रणाममन्त्रैस्तै सनाममन्त्रैश्च पञ्चभि ।
प्रकुर्याद्ब्राह्मणानां च द्वादशानां च भोजनम्॥

आशिषां कर्मणां पश्चात्पुनर्नान्दीं समाचरेत्। एवं कृते तु मुच्येत सद्यः तद्दुर्निमित्ततः
मुखमारुतसंरुद्धः पावकः स्यादपावकः। तेन सर्व पक्वमात्रं शूद्राणां योग्यमित्ययम्॥
प्रोवाच निर्ऋतिस्साक्षात्तथैवेत्याह तद्यमः। धमन्यास्य मुखाद्वह्निं वर्धयित्वैव सन्ततम्

पाकक्रिया प्रकर्तव्या स पाको दैविको भवेत्।
अयोमयी तु धमनी नारीणां न भवेदिति॥

प्रोवाच किल धर्मज्ञः चित्रगुप्तः स्वयं विभुः। किंतु सा वैणवी कार्या वनितानां सुपावनी
धमनीति जगौ ब्रह्मवृद्ध्येऽत्र विभावसुः। संवर्धनदशायां तु यदि संमार्जनी गतिः॥
इषीकाभिः प्रज्वलिता पाकाग्निर्भक्तदूषकः। तादृगग्नौ कदाचित्तु भक्तं निष्पादितं जडः
मोहेनाश्नन्पञ्चगव्या गायत्र्यष्टशतेन च। रुद्रैकादशिनीं जप्त्वा जलपानेन निष्कृतः
प्रभवेदिति धर्मज्ञाः जगदुः सनकादयः। शौर्पवातेन संवृद्धो वीतिहोत्रस्तु दुर्घटे॥

श्मशानाग्निसमो ज्ञेय शुद्धैः स्पृश्यो भवेन्न तु।
तस्मिन्नग्नौ पक्वमन्नं मत्स्यघात्यन्नमुच्यते॥

तदन्नमश्नन्मोहेन किल्बिषी ब्राह्मणो भवेत्। तद्दोषपरिहाराय षडब्दं कृच्छ्रमाचरेत्॥
पश्चादखण्डकावेरी स्नानैर्दशभिरेव वै। शुद्धोभवेन्न चान्येनेत्येवं मनुरब्रवीत्॥

गोरोगतावकाग्नीस्तं समानीयातिमौढ्यतः।
चुल्लिकायां प्रतिष्ठाप्य तस्मिन्नन्नं कृतं तु यत्॥

रजस्वलाकृतं साक्षात् तन्नाश्यमतिपापदम्। तद्भक्षणे प्रकथितं यावकाहारपूर्वकम्॥
दिनाष्टकं पञ्चगव्यप्राशनेनैव केवलम्। चतुर्विंशतिगायत्रीसहस्रजपतः शुचिः॥
भवत्येवेति भगवान् वसिष्ठो मुनिरब्रवीत्। कुशाग्नौ वा स्वर्णकारचुल्लिकाग्नौ विशेषतः
ताम्रकुट्टकवह्नौ वा शालावलजपावके। कार्वग्नौ मार्गनिक्षिप्तधर्माग्नौशास्त्रमन्दिरे॥

पीडारिका मन्दिराग्नौ लपनोच्छिष्ट पापके।
पक्वमन्नं दैववशात् मोहात्स्पृष्ट्वापि केवलम्॥

अप्रायत्यमवाप्नोति तस्य प्राशनतः पुनः। जातिभ्रंशं सद्य एव लभते ब्राह्मणो महान्
तन्निष्कृत्यै महासिन्धु स्नानानां शतकेनवै। अहोरात्रैः त्रिभिः शुद्धोपवासः पञ्चगव्यतः

कुश्माण्डजपमन्त्राणां त्रिवारपठनेन च ।
शक्त्या ब्राह्मणभुक्त्या च शुद्धो भवति नान्यथा ॥

स्वयभर्तुर्हितायाऽत्र प्रयत्नेन सुवासिनी । पाकयोग्य शुद्धमन्न पात्रेणानीय वै क्रमात्
भवनादेव भवने स्वीयवह्नेरदुर्लभे । चुल्लिकायां प्रतिष्ठाप्य पाककर्म समाचरेत् ॥
न तृणैराहरेद्वह्निं काष्ठैर्वा नव । मृण्मयेनापि पात्रेण दारुपात्रेण वा तथा ॥
शल्केन शाल्कैनाऽपि नोल्कामूलेन त हरेत् । यद्याहरेत्तु मोहेन तद्गेहश्रीर्विनश्यति ॥
अलक्ष्म्योऽत्र प्रवर्धन्ते विपदश्च तथा तथा । भवेयुरेव भूयिष्ठा तथा दुर्गतय परा ॥
तादृगग्निविशेषस्य तदानयनमात्रत । भर्ता ज्ञात्वा तु तत्पश्चात् तस्या कर्म विशेषवित्

दूरादुत्सृज्य त वह्निं तां निर्भर्त्स्य च निर्घृ(र्घृ)ण ।
तदलक्ष्मीविनाशाय स्वय प्राङ्मुखतो जपेत् ॥

सुमङ्गलीरिय मन्त्रच चापि भ्रूवक्षिते । इमां त्वमिन्द्रमन्त्र च भिय जात भियस्तदा

श्रीभूसूक्ते च चापि त्रिवार तदनन्तरम् ।
कृत्वा तु मङ्गलस्नान भवेत्ता च तत ॥
ब्राह्मण च सयुक्तौ कृताहारौ दिनत्रयम् ।
तेन श्रीको भवेतां तौ तत्र पक्वान्न भक्षणात् ॥

स्नानात्पर च पुण्याहं वाचयित्वा तत परम् । प्रतिष्ठाप्य शुचिर्गेहे मध्ये गार्ह्यस्ववर्त्मना
मुखान्ते जुहुयादाज्यसहित चरुमन्त्रत । श्रीसूक्तर्भिर्विधानेन पञ्चवार तत पुन ॥

भस्मोद्वासनत पश्चाद्गौरेकात्र च दक्षिणा ।
परिकल्प्या दुर्घोरामापद प्राप्नुयात्तु स ॥

अनन्त शुद्धपाकेन स्वय शुद्ध स्वलकृत । सनातनमन्न सुमुख भुञ्जीयात्प्राङ्मुखोद्विज
परपाको नैव भवेत् पराज्ञ परमन्दिर । पराधीनो भवेन्नैव पर प्रैष्यश्च याढव ॥

नित्याग्निको भवेच्चापि सोमयाजी भवेत च ।
यद्वा भवेदाहिताग्नि समन्त्र सर्वथा भवेत् ॥

अश्रोत्रियो न म्रियेतानाहिताग्नि कथ चन । म्रियतेनासोमयाजी ह्यमन्त्राग्निर्म्रियेत च

नित्यकर्मकरो भूयात् नित्यं श्रोत्रियपूजकः । उदासीनो श्रोत्रियेषु सुमहात्मसु संमुखः ॥
भवेद्देवान्वहंगेही तटस्थो मध्यमेष्वति । श्राद्धकर्मपरो भूयाच्छ्रद्धालुः कर्मभयितकः ॥
श्राद्धकर्मसु सर्वेषु शौचमक्रोधमत्वरा । सद्ब्राह्मणान्वेषणं च सौमुख्यं सत्यभाषणम् ॥
सद्वस्तुसंगृहस्त्वैक द्रव्यं चापि तथा पुनः । अदानं सर्ववस्तूनां यस्य कस्यचिदत्र वै ॥
परवस्तुप्रग्रहश्च तत्कथाप्रतिपादनम् । तद्धर्मशास्त्रतत्त्वैकचिन्तनं तन्निरीक्षणम् ॥
संपादितानां द्रव्याणां वस्तूनामवलोकनम् । समीकरणमेतेषां तत्र तत्र नियोजनम् ॥
मुहूर्तपश्चकादेतदत्यन्तावश्यकत्वतः । समनुष्ठेयमेवस्यात्पुनरन्यानि यानि वा ॥
तानि कार्याणि भूयश्चानुष्ठेयानि विशेषतः । अत्र स्नानात्परंसन्ध्यामात्रं होमश्च केवलः
वेदस्याध्ययनं नैव व्रतकृच्छ्रादिकं तथा । अभिवादनकार्याणि बन्धूनां महतामपि ॥
उपायनप्रग्रहणं पुनश्च प्रतिपादनम् । वर्जयेत्तु विशेषेण श्राद्धीयेकानि तत्करः ॥
तत्प्रश्नप्रकृतीह्यन्य विशेषनियमो मतः । एतद्दिनत्रयमिति केचिदाहुः मनीषिणः ॥
पूर्वेद्यु रपिचश्वश्च तद्दिनत्रय कर्मणा । सर्वे ˙ रागाणां ˙ स्मिन् ··· पस ··· पुनः ॥
परं तप मात्रं स्यादेकभुक्तिश्च केवला ।
दिवसे तत्र विज्ञेया तच्छ्राद्धं तर्पणान्तकम् ॥
इत्युक्त्वा सर्वशास्त्राणामेतावान्निश्चयः परः ।
निमन्त्रिणां ब्राह्मणानां पूर्वरात्रौ प्रचोदितम् ॥
क्ति परतोज्ञेयं ˙ सनकृतेः परम् ।
परेद्यु रेवं प्रातश्च सन्ध्याहोमात्परं पुनः ॥

## श्राद्धे निमन्त्रणक्रमः

आमन्त्रणं तद्धोक्तॄणां विधिना चोदितं तथा ।
संकल्पानन्तरं श्राद्धे पूर्व ... रेव वै ॥
वरणंतत्प्रकर्तव्यः पित्र्युद्देशेन तद्दिने । पितृभक्त्या श्राद्धकर्ता मासषट्कस्य पूर्वतः ॥
ब्राह्मणान्वेषणं कुर्यान्मनसैव विचक्षणम् । वेदवाची महाभाग साचारे साग्निहोत्रिणे

एतस्मिन्नपि वा लब्धे पित्रानन्दो भवन्महान् ।
ब्राह्मणस्तादृशो भाव्य कुलीन क्रोधवर्जित ॥
अदाम्भिकश्च धर्मिष्ठ श्रोत्रिय श्रोत्रियोद्भव ।
ब्रह्मण्या ब्रह्मनिष्ठश्च सर्वपात्रोत्तमोत्तम ॥
दैवाद्विस्मृतसद्वक्त्र यद्वोक्त परिकीर्तित ।
क्रियानर्ह स विज्ञेय त्याज्य स्याच्छ्राद्धकर्मणि ॥

स्वाधीनवेद सतत पदक्रमविरापवित् । तत्प्रयोगविशेषज्ञ विनियोगविशारद ॥
अध्यापकश्चरितोऽय नित्यप्रवचनोन्मुख । वाचस्पत्या प्रसक्त प्रयासो ब्राह्मणोत्तम
साध्यात्पाठक एवाय सहितामात्र पाठनात् । वाताध्यायस्तु ऋग्वेदे साम्नि सप्तस्गानव
वेदाध्यायी तु विज्ञेयो स एव श्रोत्रियोऽपि वै । पदाध्ययनता विष्णु साक्षादेव न सशय
पदप्रकृतिरतस्या सहिताया क्रमस्तु म । सहिताकारकोऽत्यन्त क्रमलासमाततोऽधिक
साक्षाद्रुद्र इतिरूपात क्रमाध्यायी तत्स्थान । स्वरवर्णविशेषज्ञ स हरो हरिरेव च ॥
यजुर्वेदस्यैकदेश ऋग्वेद सामनामक । तस्मिदानक इत्येव तद्व्यूढमनेतर ॥
ब्राह्मणपूतमा क्रया निरितिस्तु महच्छ्रिय । देवद्विजर्षिमुनय विप्राश्चेति हि पञ्चधा ॥
सहितामात्रनाम्ना विप्रा सत्क्रियादका । पदेन कर्मणा चापि द्विपदा देन शाद्विदा
ऋग्यय क्रमता क्रया धृयथत्ताश्च कल्का । परायातेनमुनय तथा सहितया पुन ॥
अहिरण्यर तन्मन्त्र रूपगाणविशिषत । विप्रा स्मृरते परमा सर्वकर्मैकसाधका ॥
ऋक्मामाख्या ब्रह्म या कल्पविशारदा । सर्वसर्व कल्पनिष्ठा ब्राह्मणा सर्वसपदे
योग्या भवन्ति सतत तस्माच्छ्राद्ध पु तादृशान् । ब्राह्मणानुपयुञ्जीत न वेदाक्षरवर्जितान्

कली तु काल श्राद्धयोग्या सुदुर्लभा ।
अब्राह्मणात्याजात वदय श्रोत्रियद्विष ॥
कचिम ध्यामन्त्रमात्रानभिज्ञा ब्राह्मणव्रवा ।
मस्कमुश्रमान्नृणा विप्राभासा कुवृत्तय ॥

ब्रह्मविद्याविहीना न समाहाव्यु वदिक । त्यक्तवदा त्यक्तशाखा त्यक्तसूत्रास्तथा पुन

गोत्रभ्रष्टाभिन्नशाखाः शिखाभ्रष्टाश्च केचन। अन्यवेदशिखाशाखा गोत्रसूत्रावलम्बिनः
... ... ... .... कर्मणा। अपात्रभूता विज्ञेयाः तूर्णीं ब्राह्मणशब्दिताः
न विद्यया केवलया तपसा वापि पात्रता। यत्रवृत्तिरिमेचोभे तद्धि पात्रं प्रचक्षते॥
तथाविधब्राह्मणानां दुर्लभे केवलं पुनः। स्वबन्धुष्वेव यत्नेन भोक्तॄः संपादयेत्तथा॥

अश्रोत्रियं श्रोत्रियं वा ब्रह्मवृन्नामधारकम्।
स्वकीयेष्वेव भोक्तारं यत्नात्संपादयेद् द्विजम्॥

स्वकीयाश्चेत्तत्र सम्यक् तत्त्वरूपं प्रकारतः। ज्ञातं भवति तस्मात्तु परेषां दुर्लभे स्वयम्
मुख्यतः श्राद्धयोग्यास्ते योनिसंबन्धवर्जिताः। गोत्रसंबन्धरहिताः मन्त्रसंबन्धशून्यकाः
येनकेनाप्युपायेन वेदाक्षरसुपूरिते। सुशुद्धे ब्राह्मणमुखे कव्यान्नं पातयेत्सुधीः॥
कुक्षौ तिष्ठति यस्यान्नं वेदाभ्यासेन जीर्यते। कुलंतारयते तेषां दशपूर्वान्दशापरान्॥
अवेदाक्षरकुक्षिस्थमन्नं भक्तं मृताहके। प्रकुर्यान्नोदनंतेन कर्तुर्दोषो महान्भवेत्॥
नन्दन्त्योपधयस्सर्वे वेदज्ञे गृहमागते। वयमेतत्कुक्षिगताः यास्यामः परमां गतिम्॥
वेदज्ञे पितृतृप्त्यर्थं यदल्पं बहु वस्तु तत्। दीयतेनुपकारार्थं मेरुमन्दरसंनिभम्॥
अनश्वरममोघं स्यात्पितॄणां पूर्णतृप्तिदम्। वेदाक्षरपरित्यक्तलपनत्यक्तमोदनम्॥
वालुकात्यक्तसलिलरूपवद्व्ययमेति वै। स्वशाखायां दुर्लभेषु भोक्तॄनन्यान्निमन्त्रयेत्॥

नातिचारान्नातिवृद्धान् नातिस्थूलान्कृशास्तराम्।
अप्यल्पभक्षकान्भूयः गृह्णीयाद्बहुभक्षकान्॥

दृष्ट्वा तु पितरः श्राद्धे ब्राह्मणं बहुभक्षकम्। दृष्टेष्वलभिया सद्यः कुर्वन्त्येव पलायनम्
अत्यल्पभक्षणपरं ब्राह्मणं तं विलोक्य तु। न तृप्तिमधिगच्छन्ति तत्र श्रोत्रिय एव तत्
तत्पीतसलिलादेव नष्टक्षुद्दाहकश्मलाः। आद्वादशाब्दा संप्राप्त महातृप्त्यैकनिर्भराः॥

प्रभवन्त्येव तस्मात्तु वेदिनं तं निमन्त्रयेत्।
वेदः साक्षाद्धरिः प्रोक्तं स वेदो यस्य सन्ततम्॥
जिह्वायां हृदि वाऽस्येऽस्य वर्तते सहि चोदितः।
साक्षान्नारायणः श्रीमान् तद्भक्तौ किम दुर्लभम्॥

तदभावे तु शिष्यं वा पुत्रं पौत्रं च विद्व(ट्प)तिम् ।
आत्मानं भोजयेद्वाऽपि न विप्रं वेदवर्जितम् ॥
वेदिनां पुरतो यो वा क्षुधितस्तर्कवादिनः ।
पुरस्कारोऽत्यर्चनया भ्रान्तोऽयं वालिशः स्मृतः ॥
पुरतः श्रोत्रियाणां यो वेदत्यागपुरस्सराम् ।
कृतशास्त्रप्रयासान् नृन्भ्रान्तो ह्यर्चितुमिच्छति ॥

स रोगी सपरित्यज्य तरः दुग्धान्न संशयः । कलौ प्रायेण सर्वत्र पुरस्कारो न वेदिनाम् किंतु तत्तर्किणामेव पञ्चम्यन्त प्रधानतः । शूद्रभार्याश्च शूद्राश्च केवलं शुद्धतर्किणः ॥ वेदाख्यान्ब्राह्मणादेव तिरस्कुर्वन्ति तत्कलौ । कलिधर्मपरो न स्याद्ब्राह्मणो वैदिकोत्तमः

कुशास्त्रभाषा शास्त्राणि प्रामाण्येन न विश्वसेत् ।
गानशास्त्राणि कृत्स्नानि नृत्यशास्त्राणि यानि वा ॥

सभारम्भकशास्त्राणि तालगीतलयाश्रिता । वैद्यशिल्पाङ्कुशास्त्राणि हीन्द्रजालीयकानि च वैदिकस्तत्परा सर्वा महावेदव्यथिन्नया । अमकलौ तादृशान्सर्वान्वेदमन्त्रबहिष्कृतान् सन्ध्यामन्त्रैकनिधुरान्पुनः श्रोत्रियरूपतः । तत्र कार्येष्वागतास्तान्साम्येन न तु पूजयेत् पैतृकेषु विशेषेण मौञ्ज्याग्निषु मतादिषु । श्रौतेषु स्मार्तकृत्येषु न साम्यादर्चयेदिति ॥ ब्राह्मणान्भोजयदिति विधिकार्येषु सरत । सन्नस्ते वैदिका एव मुख्यत्वेन सदा द्विजैः

परिग्राह्या पुरस्कार्या न तादृक्शास्त्रधारिणः ।
ब्राह्मणानां धनं वन्ना भृत्यत्तुस्सामनासका ॥

तच्छिष्याप्तपरं श्रौत्रकल्पा सूत्राणि तत्परम् । तत्प्रयोगपरिज्ञानं विनियोगपुरस्सरम् पश्चात्तदर्थविज्ञासा तन्त्र तर्कचिन्तनं अभ्यासस्स तु कर्तव्यो न तत्पूर्वं [redacted] नरः अभ्यसेन्निनिरामनं ब्रह्मचर्येण ताडव सौम्यव्रतान्ते तर्कस्य समयो वेदचोदितः ॥ - आग्नेयकाण्डात्परतो तद्वत्तम्य च मध्यमं । उक्तो व्याकरणस्यैव मर्यादं विधिरव्ययम्

एत्र स्थितऽत्र ना न्विया मर्यादा वदनिर्मितम् ।
समुल्लङ्घ्य ब्रह्मचर्यं शुष्कतर्कादितत्क्रमा ॥

वेदश्रमपरित्यागपूर्वकं ब्रह्मविद्विषः । तर्किणः शिल्पिनो गानपरानाक्षत्रकास्तथा ॥
नटीवैणविकाः सर्वे वैदिकाः स्युर्विनाश्रुतिः । वैदिकानां समाजेषु सर्ववैदिककर्मसु ॥
समाधिक्यपुरस्कारपूजाकार्यकरो नरः । भूयिष्ठान्यशुभान्येव विन्दते न तु संपदः ॥

अपूज्या यत्र पूज्यन्ते पूज्या यत्रावमानिताः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं ध्रुवम् ॥
यत्र नास्ति भयत्राता श्रोत्रियस्सजला नदी ।
आत्मसौख्यं यत्र नास्ति न तत्र दिवसं वसेत् ॥

अवशागतचित्तस्य नास्ति यत्र विधायकः । असंभावितदुष्कार्यजातदुष्कीर्तिभञ्जकः ॥
यस्मिन्देशे दुर्लभःस्यान्न तत्र दिवसं वसेत् । कुग्रामे कुत्सिते देशे दुष्टक्रूरजनाकुले ॥
वेदद्विड्जनभूयिष्ठे तिष्ठेन्नापि क्षणं द्विजः । तादृग्देशनिवासेन कलाज्ञानं भविष्यति
कलाज्ञानेन सततं कर्ममात्रं विनश्यति । तिथिभेदकृतंश्राद्धं पुनः करणमर्हति ॥
मासभेदात्पक्षभेदात्तथा तत्स्यात्ततोद्विजः । ग्रामेविद्वज्जनावासे निवसेत्कर्मसिद्धये ॥
दुर्व्यापारालस्यकान्यनियोगादिनिमित्तकैः । ताम्बूलचर्वणजल प्राशनात्परतोऽपि वा ॥
शलाटुफलतक्रेक्षुफललाजादिभक्षणात् । परतो वा सार्धयामात्स्मृतं श्राद्धं तु तर्पणम् ॥
अपि वा सद्य एवायं सर्वसंभारसंभृतम् । निवर्तयेच्छ्राद्धकर्म येनकेनाप्युपायतः ॥

शक्तौ सत्यां सद्य एव कुर्याद्भक्त्या विचक्षणः ।
शक्त्याभावे उपोष्याऽथ पिवाह्नि पदके चरत् ॥

तत्संकल्पस्यपुरतः अनाज्ञातत्रयं जपेत् । इदं विष्णु महामन्त्रत्रिंशद्वारजपस्तथा ॥

व्याहृतीनां समस्तानां व्यस्तानां च सहस्रकम् ।
जप्त्वापश्चाच्छ्राद्धकर्म सम्यङ्निर्वर्तयेद्द्विजः ॥

विध्युल्लङ्घनदोषे तु प्राजापत्यं त्रिशोधकम् । यदिवालाः परं प्रातः कर्तारःश्राद्धकर्मणाम्
साक्षादन्नकृताहाराः स्युश्चेत्तु तदनन्तरम् । भुक्त्यन्तरं परित्यज्य परेद्युः प्रातरेव वै ॥

कुर्युः भुजिक्रियां मोहात्तद्विज्ञानात्परं तु ते ।
गुरुभिः वोधिताः सद्यः स्नात्वा पश्चाज्ञ्चवर्त्मना ॥

गायत्रीं तद्दिने जप्त्वा सहस्रं वेदमातरम्। श्राद्धं कुर्युर्विधानेन निष्कृते परत पुन ॥

निष्कृतिरेषा प्रकथिता प्राजापत्यद्वयं तथा।

गोरत्र दक्षिणा देया ब्राह्मणाय महात्मने ॥

गृहीतवस्तो विदेशस्थ स्वदेशस्थोऽपि वा द्विज। अनेककार्यशतकं सलीनोरोगपीडया

समागतान्तश्राद्धदर्श निरूप्यैवायशास्तुन।

भुक्ते परं वा भुक्ते वा स्मृत्या तस्तदनन्तरम्॥

भुक्तमन्नं छर्दयित्वा स्नात्वाऽऽचम्य शुचि स्वयम्।

पावमान्यश्च कूश्माण्डं शिवसङ्कल्पसूक्तकान्॥

तान्पश्च चमकं वापि पूर्षसूक्तमघोरकम्। नारायणं चोत्तरं वै अप्यनाङ्गात भूर्भुवं ॥

उपोष्यतद्दिनपश्चात्परेद्यु प्रातरेव वै। प्रातस्सन्ध्यां साधयित्वा ह्यौपासनमेव च॥

कूश्माण्डहोमं निर्वर्त्य पूर्षसूक्तं च तत्परम्। अप्यदशायजुमन्त्रान्कुर्याच्छिष्टान् परम्॥

अघोद्वासनत पश्चान्नैचिकीना नय तत। प्रदान ब्राह्मणानां तु कृत्वा यद्वा तु दुर्लभे

तन्मूल्यदानं कुर्याच्च तत श्राद्धं विधानत। निवर्तयेदेवमेत न चेद्दोषो महान्भवेत्॥

दर्शादिके विशेषोऽस्ति पिण्डादिकभक्षणे। अज्ञानादथवाऽऽदेवात्कृतेऽप्येतत्समाचरेत्॥

अष्टोत्तरशतं जप्त्वा गायत्रीं वेदमातरम्। अनाज्ञातत्रयं पश्चात् व्याहृतीश्च त्र्यम्बकम्

पूषसूक्तं च कूश्माण्डं पावमान्यश्च तान्परान्। पञ्चरुद्रानौत्तरं च नारायणमनन्तरम्

क्षमापवित्रं घोषशान्तिं दशशान्त्यादिकं क्रमात्।

जप्त्वादर्भेषूपविश्य प्राङ्मुखेनैव मन्त्रवित्॥

जलं मनोऽथ वायुं च निरुध्यैव समाहित। दशप्रणवगायत्रीं एकोच्छ्वासेन शक्तित

श्वासद्वयेन वा जप्त्वा तदुच्छ्वासत्रयेण वा। त्रिशतं प्रजपेदेवं तस्माद्दोषात्प्रमुच्यते

अभिर्गोभि शं नो वेदघमर्षणमेव वा।

निमज्ज्य सलिले जप्त्वा शक्त्या दद्याच्च दक्षिणाम्॥

तस्माद्दोषात्प्रमुच्येत शुद्ध पश्चात्तु तत्पुन।

दर्शश्राद्धं प्रकुर्वीत हिरण्यामलकादिभि ॥

अष्टोत्तरशतश्राद्धकरणापाटवो द्विजः । सर्वप्रकृतिमूलं तं दर्श वा येनकेनचित् ॥
हिरण्याममधुक्षीर मुखैर्मन्त्रविधानतः । षड्देवताक्रमेणैव त्यक्त्वाऽऽलस्यादिकं तथा ॥
निर्वर्तयेद्विधानेन विषुवेऽप्ययने तथा । महालयाख्यपक्षं च व्यतीपाते च मार्गके ॥

तृतीयामम्रि वैशाखे ब्राह्मणः पितृभक्तिमान् ।
यथाशक्ति यथोत्साहं पितृभ्यः प्रीतये बुधः ॥

दिनशून्यमकृत्वैव कुर्याद्ब्राह्मणभोजनम् । अधर्मकं सधर्मं वा सर्वप्राणेन वाडवः ॥
विप्रभुक्तिकरोविद्वान्सततं सर्वदेवताः । प्रीणयत्येव नूनं वै ब्राह्मणस्सर्वदेवताः ॥
इत्युक्तश्रुतिवाक्येन तस्माद्ब्राह्मणभोजने । कृतेऽस्मिंस्तेन पितरः परां तृप्तिमनश्वराम् ॥

प्राप्नुवन्ति हि ते कन्या येऽपि बर्हिषदोऽखिलाः ।
अग्निष्वात्ताश्च सोम्याश्च औमाऔर्व्याश्च सन्ततम् ॥

न विप्रभुक्तितुलितं कर्मास्ति जगतीतले । तेन सर्वक्रियाजन्यं फलानि लभते नरः ॥
अष्टोत्तरशतश्राद्धान्येतानि किल सूरिभिः । कर्तव्यत्वेनचोक्तानि सत्यां शक्तौ विशेषतः
अमामनुयुगक्रान्त धृतिपात महालयाः । अष्टकान्वष्टकाः सर्वाः षण्णवत्यः प्रकीर्तिताः

प्रतिमासं प्रयत्नेन मासे श्राद्धानि यानि हि ।
मिलित्वा तैः पुरोक्तानि सर्वाण्यपि महात्मभिः ॥

अष्टोत्तरशतानीति गणयित्वेक ईरितः । अमामनुयुगास्तत्राष्टकान्वष्टकास्तथा ॥

महालयश्च क्लृप्ता हि तस्मान्नित्याः प्रकीर्तिताः ।
ये नित्यास्ते पिण्डयुक्तास्तद्भिन्नाः पिण्डवर्जिताः ॥
संक्रान्तिधृतिपाताख्याः अक्लृप्ता एव सन्ततम् ।
तस्मादपिण्डाख्याताः स्युः न नित्या इत्युदीरिताः ॥

पुनरन्यानि पुण्यानि श्राद्धान्याहुर्मनीषिणः । घृतश्राद्धं दधिश्राद्धं ग्रहणश्राद्धमित्यपि
तीर्थश्राद्धं पात्रयोगश्राद्धं वृषभनामकम् । पुनरन्यानि सर्वाणि देवयुक्तानि सन्ततम्
देवहीनानि सर्वाणि प्रेतोद्देशेन यान्यपि । तानि सर्वाण्यशुचिना निर्वर्त्यान्येव सर्वदा
अत्याज्यानि भवेयुर्वै कालप्राप्तानि केवलम् । तानि नैमित्तिकान्येव कामान्येवं बहूनि हि

वर्णी गृही वनी वापि क्रमसन्यासकर्मणि । जीवश्राद्धविधानेन कुर्यादेव द्विजोत्तम
आपत्सन्यासमकार्यं तु नियमा निखिला अपि । नियतन्ते द्विजातीना प्रैषमात्रेण केवलम्
स सन्यासो भवेदेव तच्चित्तस्य महात्मन । सन्यासाद्ब्राह्मणस्यात्र सर्वशास्त्रेषु निश्चितम्

न सशयोऽत्र कर्तव्य सशयी पापभाग्भवेत्।
सन्यस्ताना कदाचित्तु यस्मान्नाशौच नोदकक्रिया ॥
भिन्नोर्मृत्तयकायोऽत्र दर्भग्रन्थिहिरण्ययो ।
तुलसि सर्वदा प्रोक्त पवित्र पावनो महत् ॥

नर्य मस्मैक्तुलसि स्पर्शनादघनाशन । मालिन्यायां यथा शुद्ध बशकीट बहिष्कृत ॥
अत्यन्तैकमहाशुद्ध स्पर्शमात्राघारक । क्षणाग्निस्याग्रथमं एवहशङ्खवदेव वै ॥
अङ्कीकार्य पूजनीय भर्गैरपि नरैरपि । वन्द्य सेव्यो भावनीय समस्कार्यो विशेषत
नोपभ्रा दृष्टिमात्रेण तद्दर्शनमात्रत । शतान्निष्टोमजफलं नर प्राप्नोत्यसंशयम् ॥
यतिक्रियाविशेषोऽत्र पुत्रपौत्रप्रदायक । तत्कर्ममध्ये तच्छीर्षभेदनादेव देहिन ॥
अनेकजन्मसलीनमहानन्यानत्वमोचिता । पुत्रवन्त्यो भवन्त्येव तत्स्तत्वविरयात्र हि
ओषधिमन्त्रवद्बुद्धि प्राप्नोति परमा तराम् । तच्छिरस्ताडननारिकेललेशस्य भक्षणात्
वन्ध्या पुत्र लभतैव शतवत्सरजीविनम् । तन्निवेदितवस्तूना याचनापूर्वकेण ये ॥
कुर्वन्ति भक्षण भक्त्या तेऽतिराजकरूद्भवम् । सुकृत प्राप्नुवन्त्येव सदा तदनुयायिन ॥
यत्नाप्योतन पुण्ये महासुकृतपाकज । सरूपे श्रेयसा हेतुभूते परमदुर्लभे ॥
पदे पदे प्राप्नुवन्ति दर्शादिफलमुत्तमम् । तदावृवननस्सद्य परं तत्तननाच्छिवान् ॥
वाह्नीस्नानशनस्सभून यत्फल महत् । अवाप्नोत्यवशात्मून सत्यमेतन्मयोदितम् ॥
यतेरेकादशदिने पावणश्राद्धनामके । सप्राप्ते तु तदा कश्चिच्छिष्याद्याश्यात्सुतेतर ॥
तन्नात्मान ततोभूय अन्तरात्मानमेव च । परमात्मानमुद्दिश्य कर्म तत्तु प्रसाधयेत् ॥
पुत्रस्तु तातत्रितय समुद्दिश्यैव तच्चरेत् । यतेस्तु ब्रह्मरूपत्वाद्ब्रह्मण सर्वरूपत ॥
पित्रादिरूप रस्याच्छिप सर्वं च तस्य वै । सगच्छतेऽस्ततस्तु पितृरूपेण तच्चरेत् ॥

शिष्यादिकस्तथान्य(न्य)श्चेदात्मादित्रयरूपत ।
तत्कार्यमिति धमज्ञसमयो विधिचोदित ॥

द्वादशोऽह्नि तत्पश्चान्नारायणबलिः परा। तदुद्देशेन कर्तव्या तत्र साक्षाद्धरिः परः ॥

नारायणो देवता स्यात्पूर्षसूक्तविधानतः ।
पूजाहोमादिकः कृत्स्नः कर्तव्यत्वेन चोदितः ॥
द्वादशानां ब्राह्मणानां शास्त्रतः स्यान्निमन्त्रणम् ।
आराधनक्रिया पश्चात् त्रयोदशादिने भवेत् ॥

गु(रु)रूभूतं समुद्दिश्य भिक्षुं मस्करिणं यतिम्। सिद्धिंगतं परंहंसं करिष्ये राधनं त्विति संकल्प आदौ कर्तव्यः पश्चादत्र वा देवताः। गुरुराद्यः प्रकथितः द्वितीयः परमो गुरुः परमेष्ठिगुरुः पश्चात्पराव(प)रगुरुस्ततः। चतुर्थोऽत्र प्रकथितः कर्मण्याराधने सदा ॥ चत्वारो देवताः प्रोक्ताः पश्चात्ते केशवादयः। देवता द्वादश प्रोक्ताः शुक्लपक्षे न चेत्तथा

कृष्णे तु देवताः प्रोक्ता तथा संकर्षणादयः ।
केशवोऽत्र प्रकथितः पश्चान्नारायणः स्मृतः ॥
तृतीयो माधवः प्रोक्तः गोविन्दोऽथ तुरीयकः ।
पञ्चमो विष्णुरित्येव मधुसूदन एव हि ॥
षष्ठः प्रकथितः सद्भिः सप्तमस्तु त्रिविक्रमः ।
वामनः श्रीधरः पश्चात् हृषीकेशोऽत्र चोदितः ॥

पद्मनाभस्तदा पश्चाद्दामोदर उदाहृतः। संकर्षणो वासुदेवः प्रद्युम्नश्चाथ कीर्तितः ॥ अनिरुद्धः चतुर्थः स्यात्पुरुषोत्तम इत्यथ। पञ्चमो देवता ज्ञेयः षष्ठोऽधोक्षज ईरितः ॥ नृसिंहा···तसंज्ञौ तो(तौ)देवौ पश्चात्प्रकीर्तितौ। जनार्दनस्तु नवमः उपेन्द्रो दशमस्ततः हरिरेकादशोज्ञेयः श्रीकृष्णो द्वादश स्मृतः। एतेषां वरणं कृत्वा पादौप्रक्षाल्य पाथसा मण्डलार्चनतः पश्चात्तत्पादसलिलं शिवम्। संगृह्य पाद पूजान्ते गोप्यं कृत्वैव निक्षिपेत्

धान्यराशौ तण्डुले वा ततः पादौ स्वयं यतन् ।
प्रक्षाल्य पादावाचम्य तान्विप्रांस्तदनन्तरम् ॥

समर्चयित्वा विधिना विष्टरासनपूर्वतः । उपचारैश्च निखिलैरर्चयेद्धरिबुद्धितः ॥ बुद्धिपात्रेषु तत्पश्चात्समाराधनवर्त्मना। परिवेषणतः पश्चात् गायत्र्या प्रोक्ष्य सर्वतः ॥

सहस्रशीर्षं देव पुरुषसूक्त तदुत्तरम् । जपित्वैवविधानेन तन्मुखेनापि तत्परम् ॥

वाचयित्वा महामन्त्रान्वैष्णवान्नानिपावनान् ।

तत्परं पूर्वतःप्रोक्ष्य तदन्नादयिलं च यत् ॥

देवसविनरिति तन्मन्त्रेणैव यतत्पर । परिषिच्य विधानेन पृथिवीतेति मन्त्रव ॥

अभिमन्त्र्याभिलसन्नानां पात्रमनिशम् । तत्परस्पर्शपूर्वेण सस्तनात्परमेव वै ॥

अन्नत्याग प्रकुर्वीत मोपयेद्वापि तत्परम् । भुक्ते पर ब्राह्मणानां तीर्थराजार्चनं भवेत्

भुक्तिमध्ये ब्राह्मणानां सर्वोपनिषदामपि ।

वैष्णवाना च शैवाना मन्त्राणां वाचन निवे ॥

बलात्पश्चाद्यमेव तदूनान्ते द्विजन्मनाम् । सहस्रसर्वनं कृत्वा गन्धपुष्पादि दानतः॥

ताम्बूलदक्षिणादीनां प्रदानात्परमेव वै । तत्तीर्थप्राशनं कृत्वा प्रदक्षिणपुरस्सरम् ॥

प्रणम्य दण्डवद्भूमौ भोक्तृन्मत्रान्द्विजोत्तमान् । विसर्जयेद्विधानेन प्रतिमास तत परम्

आराधनात्परमेव स्यान्नकुर्यान्मासिकादिकम् ।

प्रतिमत्सर तस्मिन्यते सिद्धिदिने सुत ॥

तत्पार्वणविधानेन श्राद्ध कुर्याद्विधानेन । ब्रह्मभूतस्येति पितु भवेत्तद्धि विशेषणम्॥

मन्यत्तस्य न चान्यस्य भवेत्तद्धि विशेषणम् । तादृग्विशेषणानुक्तौ यादृशस्य पितुर्यते

तच्छ्राद्ध तद्दिन व्यर्थं प्रभवद्द्व केवलम् । असन्यस्तस्य तातस्य प्रोक्तौ तस्य मृताहके

विशेषणस्य प्रभवेच्छ्राद्ध मूलहन परम् । पितृशब्दात्परमूश्राद्धं संकल्पादिषु तद्दिने॥

उक्तिमात्रेण नष्टं स्याद्वदेत्समासात्पननम् । उपरागश्राद्धकर्म तत्स्नानात्परमेव वै॥

पाकारम्भ प्रकर्तव्य तत्पूर्वं नैव न चरेत् । अत्यन्तबहुपुरुरूपदार्थानां परिग्रहः ॥

नात्यन्तमावश्यकः स्यात्किं ह्यल्पाना परिग्रह ।

प्रकर्तव्यो विशेषेण भोक्तृणां यन्मत परम्॥

द्रव्याणाम सुसम्राह्य त्वराचात्र हि धर्मतः ।

अन्नाथ परम प्रोक्तं शौचं चापि यथा तथा ॥

प्रभूतमाज्य भोक्तृणां दधिशाकचतुष्टयम् ।

तत्राय(त्र) (त्रय) (द्वय) वापि सूप पायसमेव च ॥ ६

मापापूपास्तिलापूपाः पिष्टापूपाश्च केवलाः । उत्तमत्वेन कर्तव्याः कात्रस्याद्विष्टरः परः
अत्र दर्भासनं मुख्यं क्षणश्चापि तथा मतः । अर्ध्यः कृता कृतोऽत्र स्यादर्थादेवलयुग्मकम्
एवमेव प्रदेयं स्यादत्राभरणजालकम् । विशेषेणात्र विप्राणां प्रदेयं स्याच्च शक्तितः ॥
दक्षिणात्र विशेषेण प्रदेया लोभशून्यतः । श्राद्धाङ्गतर्पणं चापि सच एवेति चोच्यते ॥
तस्मिन्नेव गृहेकार्यं तस्मिन्नत्यल्पके पुनः । तद्भुक्तिमध्ये तत्कुर्यात्तथा पिण्डक्रिया च सा
सर्वयत्नेन महता तस्मिन्नेव समाचरेत् । द्विमुहूर्तादिके तस्मिन्नन्नश्राद्धं प्रचक्षते ॥
सोमोपरागे सूर्योपरागे च ब्रह्मवादिनः । ग्रहणेऽत्र श्राद्धकर्ता ब्राह्मणो धर्मवित्तमः ॥
ऋणत्रयादिमुक्तः स्यादधीताखिलवेद्यपि । समनुष्ठि तनिश्शेष सप्ततन्तुक्रियोऽप्ययम् ॥
भवत्यजातपुत्रोऽपि मुक्तस्स्यात्पैतृकादृणात् । एकब्राह्मणभुक्तयाऽत्र ग्रहणे चन्द्रसूर्ययोः ॥
ता अग्निहोत्राहुतयः वत्सरस्य महात्मभिः विंशत्युत्तर तत्सप्तशतानि प्रातरीरिताः ॥

सायमाहुतयश्चापि तत्संख्याकाः पुनः शिवाः ।
कथिताः श्रुतिवाक्येन कृता एव भवन्ति वै ॥
सायं प्रातश्चाहुतयः एकस्य दिवसस्य ताः ।
चतस्र इति विज्ञेयाः वत्सरस्य तु ताः पुनः ॥
नवधाकाः संख्यया स्युः ता एतेन कृता ध्रुवम् ।
भवेयुरेव नास्त्यस्मिन्संशयोऽर्थे वदामि वः ॥

ब्राह्मणद्वयभुक्तयात्र चतुर्विंशति संख्यया । कथिता इष्टयोऽब्दस्य कृता इत्येव निश्चिताः
ब्राह्मणत्रयभुक्तया चेत्सन्निरूढपशोरपि । शरदाग्रयणस्यापि करणे यत्फलं तु तत् ॥
कथितं श्रुतिवाक्येन तदवाप्नोत्ययं महत् । विश्वान्देवान्पितॄन्मातृदारैर्मातामहैस्सह
अशेषकारुण्यपितॄन्समुद्दिश्य विधानतः । वरयित्वा विप्रमुखादसंकीर्णत एव वै ॥

पृथक् पृथक् त्यक्तलोपः जामित्रारहितस्तदा ।
प्रधानहोमतत्पिण्डप्रदानाभ्यां तदा यदि ॥
साधिश्रवणकार्येण श्राद्धमेकं स भक्तिकम् ।
विचक्षणः करोतीह जन्ममध्येऽपि वा सकृत् ॥

सोऽय महान्ति दानानि तुलादीन्यखिलान्यपि ।
प्राजापत्यादिकृच्छ्राणि व्रतानि विविधानि च ॥

भवेत्कर्ता तदा भूय सर्वतीर्थे कृताप्लव । कर्मणा तेन महता तुष्टोऽय परमेश्वर
सर्वदेवमयो योगी ध्ये(योनारायणो)विभु । तत्काङ्क्षितान्प्रदत्वैह कृत्स्नयज्ञात्मको वि
सायुज्यनामकांमुक्तिं प्रदद्यादचिरेण हि । सर्वयागमयस्यास्य श्राद्धस्य करणात्किल
यागैर्यथातिसुप्र णा । प्रतुष्टश्चित्तशुद्धिमतां दत्वाऽस्मै भक्तवत्सल
श्रवणादिसुखेनैव ज्ञान तद्ब्रह्मबोधकम् । उत्पादयित्वा तद्द्वारा कृतकृत्य करोति हि
यागाकालाश्च भगवान्वदमात्रस्वरूपिण । सहृत्यलोकानखिलाम् पुरादेवो जगत्पति
रूपहीनो वेदरूपधरो नित्योऽयमच्युत । उत्तिष्ठत्किल (?) तस्मात्तु वेदो देवस्य विग्र
तद्वेदमन्त्रसाध्यत्वाद्यज्ञो वेदस्वरूप्यति । यज्ञस्यापि तथाकाले कर्तव्यत्वेन चोदनात्
कालोऽपि वेदरूप्येव तन्मन्त्रैर्विनियोगत । तत्रेदानीं तदासामित्येते पञ्चदशापि ते
मुहूर्तानां मुहूर्ता हि पृथङ्मन्त्राश्च ते पुन । एतर्हिक्षिप्रमजिरमाशु पञ्चाभिमेषक ।
फणोद्रवद्रवति प्रधन्स्वरत्स्वरमाण एव च । आशुराशीयाञ्जवश्च स्मृत पञ्चदशाक्रमा
एतेषामपि सर्वेषां तथा देवतया पुन । अनुपक्र प्रकर्तव्य इत्यभावे तु सन्ततम् ।
तथैव वक्ष्यमाणानां मुहूर्तानां च कृत्स्नश । अह्ना तथैव रात्रीणां तादृङ्मन्त्रैर्यजुर्मयै
इष्टका उपधेया स्यु सावित्रचयने किल । सावित्रचयनाख्योऽय कालरूपविशेषकै ।
मन्त्रैस्तैरुपधेय वाम् कालरूप इतीरित । एतेनाथ मन्त्ररूप वेदरूपश्च चोदित ।

स यज्ञो भगवान्साक्षात्कर्ता नारायणो विभु ।
आभूर्विभू प्रभू शम्भुस्तत्काय परमेश्वर ॥
साक्षान्मुहूर्तास्ते प्रोक्ता अह्ना पञ्चदशापि वै ।
चित्रकेतु प्रभानाभान्सभानपि तथा तत ॥

ज्योतिष्मानपि तेजस्वानातपस्तदनन्तरम् । तपन्नाभितपन्श्चाद्रोचनस्तदनन्तरम् ॥

रोचमानश्च कथित शोभन शोभमानक ।
कल्याणश्चरम प्रोक्त कालोमन्त्रात्मक पर ॥

एवमह्नां च नामानि शुक्लपक्षस्य वै क्रमात्। तत्र संज्ञाननामेदं प्रोक्तं प्रतिपदस्ततः ॥
विज्ञाननाम तु पुनः द्वितीयाया भवेद्धि तत्। एवं क्रमेण प्रज्ञानं जानच्च तदनन्तरम् ॥
अभिजानत्पञ्चमं स्यादथज्ञेयं क्रमेण वै । संकल्पमानं प्रकल्पमानं ह्युपपदेन वै ॥
कल्पमानं च विज्ञेयमुपक्लृप्तं च क्लृप्तकम्। श्रेयोवसीय आयुश्च संभूतं भूतमेव च
अह्नां शुक्लस्य मन्त्राः स्युः क्रमेण न वेदतः। ··· कृष्णपक्षस्य प्रतिपत्क्रमस्तथा ॥
रात्रेर्मुहूर्ताः मन्त्रास्ते नामरूपाः सनातनाः। दाता प्रदाताऽऽनन्दश्च मोदस्तुर्यः प्रकीर्तितः
प्रमोदः पञ्चमो ज्ञेयः पश्चादावेशयन्पुनः। निवेशयन्नेवमेव संवेशन इतिस्म वै ॥
संसन्नस्सन्न इत्येव आभवन्विभवन्नथ। संभवन्नपि संभूतः भूतश्च चरमः स्मृतः ॥
एतेमन्त्राः शुक्लपक्षरात्रीणां चोदिताः क्रमात्। मुहूर्ता वेदविहिता रात्रीणां मनवश्चते ॥
विज्ञेया अथ भूयश्च क्रमेणैव महात्मभिः। दर्शा दृष्टा दर्शिता च विश्वरूपा सुदर्शना

आप्यायमाना तत्पश्चात् प्यायमानात्ततः पुनः।
अप्याया सूनृतेरापि विज्ञेया तदनन्तरम् ॥

आपूर्यमाणा तद्वच्च पूर्यमाणा च तत्परम्। पूरयन्ती च पूर्णा च पौर्णमासी क्रमात्स्मृता
कृष्णपक्षस्य तत्पश्चादह्नां तत्क्रमतः पुनः। मुहूर्तानां हि मनवः सविता प्रथमोऽत्र हि ॥

अथ प्रसविता ज्ञेयः दीप्तोऽयं दीपयन्नपि।
दीप्यमानोज्वलन्पश्चात् ज्वलिताऽथ ततस्तथा ॥

वितपन्संतपन्भूयः रोचनोऽथ तथैव च। रोचमानश्च शंभुश्च शुम्भमानस्ततस्मृतः ॥

अन्त्योवामश्च विज्ञेयः क्रमात्पञ्चदश (शैव) ते।
अथाह्नां तस्य पक्षस्य मन्त्राः पञ्चदश क्रमात् ॥
विज्ञेयाः श्रुतिसंवेद्याः प्रस्तुतं प्रथमं स्मृतम्।
विष्टुतं तु द्वितीयः स्यात् संस्तुतं तु तृतीयकम् ॥

कल्याणं विश्वरूपं च शुक्रं तत्परमेव वै। अमृतं च ततो ज्ञेयं तेजस्वी तदनन्तरम् ॥
तेजः समिद्धं तत्पश्चादरुणं भानुमत्ततः। मरीचिमत्ततोज्ञेयं तथाभितपदेव च ॥
तपस्वच्च ततो ज्ञेयं कृष्णपक्षस्य तत्परम्। अह्नां मुहूर्तमन्त्रास्तु विज्ञेयाः श्रुतिचोदिताः ॥

